

अथ श्रीवाल्मीकिरामायणे अयोध्याकाण्डं प्रारभ्यते।

इदं पुस्तकं वाल्मीकीये रामायणे अयोध्याकाण्डात्मकं मुम्बय्यां
क्षेमराज-श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेंकटेश्वर"
( स्टीम् ) मुद्रणालये मुद्रयित्वा प्रकाशितम्।

संवत् १९९०, शके १८५५.

थिव्या भूमिः ईश्वरः स्वामी पार्थिवः राजा सुरथः सततं निरन्तर[illegible]त्यर्थः ॥ १५ ॥ तत्रेति हे विप्र
सः तत्र आश्रमाभ्यासे एकं वैश्यं ददर्श तेन सः पृष्टः भो त्वं कः असि किञ्च अत्र आगमने कः हेतुः
भवति सः राजा सुरथः तत्र तस्मिन् आश्रमाभ्यासे [illegible]मस्य अभ्यासः आश्रमाभ्यासः तस्मिन्
आश्रमाभ्यासे अभ्यासः निकटं तत्र तस्मिन् आश्रमाभ्यासे तेन राज्ञा सुरथेन सः वैश्यः कः हेतुः
भवति किं प्रयोजनं भवति ॥ १६ ॥ * * * * *
सशोक इति किञ्च मया त्वं कस्मात् सशोकः इव किञ्च दुर्मनाः इव लक्ष्यसे प्रणयोदितं भूपतेः

**तत्रविप्राश्रमाभ्यासेवैश्यमेकंददर्शसः सपृष्टस्तेनकस्त्वंभोहेतु-**
**श्चागमनेचकः ॥ १६ ॥ सशोकइवकस्मात्त्वंदुर्मनाइवलक्ष्यसे इ-**
**त्याकर्ण्यवचस्तस्यभूपतेःप्रणयोदितं ॥ १७ ॥**

तस्य इति वचः आकर्ण्य प्रश्रयावनतः स वैश्यः नृपं तं प्रत्युवाच कस्मात् कस्मादितोः सशोकः
शोकेन सह वर्त्तमानः सशोकः सहवर्त्तमानः युक्तः दुर्मनाः दुःखितं मनो यस्य सः दुर्मनाः मनः
अन्तःकरणं प्रणयोदितं प्रणयेन प्रीत्या उदितं उक्तं भूपतेः भुवः पतिः भूपतिः तस्य भूपतेः भुवः
पृथिव्याः पतिः स्वामी तस्य राज्ञः सुरथस्य वचः वाक्यं आकर्ण्य श्रुत्वा प्रश्रयावनतः प्रश्रयेण अव-
नतः प्रश्रयावनतः प्रश्रयेण विनयेन अवनतः नम्री भूतः नृपं नॄन् पातीति नृपः तं नृपं नॄन् ज-

भ्रातर: नि–

नान् पाति ब्रवीत तं राजानं सुरथं ॥ १७ ॥ मार्कण्डेयेति सुरथे प्रतिवच्युक्ता वनु वनुदि-
तायाभागरे: किं वैश्यउवाचेति जिज्ञासामालक्ष्य मार्कण्डेयमाह वैश्यउवाच समाधिरिति हे रा-
जन् अहं समाधिर्नाम वैश्य विशो भवरिति वैश्य: भवादर्थे अण् प्रत्यय: धनमस्ति येषां ते धनिन:
तथा धनिनां धनिनां धनाढ्यानां कुले वंशे उत्पन्नप्रादुर्भव: पुन: कथं भूत: असाधुभि: न साधव:
असाधव: तै: असाधुभि: साधव: सज्जना: असाधुभि: दुष्टै: पुत्रदारै: पुत्राश्चदाराश्च ते पुत्रदारा:
तै: पुत्रदारै: दारा: कलत्राणि धनलोभात् धनस्य लोभ: धनलोभ: तस्मात्धनलोभात् धनस्य द्र-

प्रत्युवाचसतंवैश्य:प्रश्रयावनतोनृपं वैश्यउवाच, समाधिर्नामवै
श्योहमुत्पन्नोधनिनांकुले ॥ १८ ॥ पुत्रदारैर्निरस्तश्चधनलोभा
दसाधुभि: ॥ विहीन:स्वजनैर्दारै:पुत्रैरादायमेधनं ॥ १९ ॥

व्यस्य निरस्त: तिरस्कृत: ॥ १८ ॥
विहीनश्चेति हे राजन् अहं दु:खी सन् वनं आगत: कथं भूत: अहं दारै: किञ्च पुत्रै: मे धनं आ-
दाय निरस्त: पुन: कथं भूत: अहं धनै: विहीन: पुन: क[illegible] भूत: अहं धनहीनत्वात् आप्तबंधुभि:
निरस्तरित्यन्वय: आगत: आगतोस्मि दारै: कलत्रै: मे मम [illegible]दाय गृहीत्वा निरस्त: त्यक्त: धनै:
द्रव्यै: विहीन: रहित: आप्तबंधुभि: चाप्ताश्च बंधवश्च ते आप्तबन्धु[illegible]: तै: आप्तबंधुभि: आप्ता मित्रा-

गि बन्धवः भ्रातरः निरस्तः दूरीकृतः ॥ १९ ॥ सोहमिति हे राजन् सः अहं अत्र संस्थितः सन्
पुत्राणां किंच स्वजनानां किञ्च दाराणां कुशलाकुशलात्मिकां प्रवृत्तिं न वेद्मि अत्र अस्मिन् आ-
श्रमे दाराणां कलत्राणां कुशलाकुशलात्मिकां कुशलस्य अकुशलस्य कुशलाकुशलौ कुशलाकुशलौ आ-
त्मानौ यस्याः सा कुशलाकुशलात्मिका ताम् कुशलाकुशलात्मिकाम् कुशलः शुभः अकुशलः अ-
शुभः आत्मानौ स्वरूपे प्रवृत्तिं वार्तां न वेद्मि न जानामि ॥ २० ॥ तामेव विवृणोति कि-
न्विति हे राजन् सांप्रतं तेषां गृहे क्षेमं अस्ति किन्नु, कथं ते मे सुताः सद्वृत्ताः सन्ति किन्नु

**वनमभ्यागतोदुःखौनिरस्तश्चाप्तबंधुभिः सोहंनवेद्मिपुत्रा[illegible]कु-**
**शलाकुशलात्मिकां ॥ २० ॥ प्रवृत्तिंस्वजनानांचदारा[illegible]चात्रसं-**
**स्थितः किन्नुतेषांगृहेक्षेममक्षेमंकिन्नुसांप्रतं ॥ २१ ॥**

दुर्वृत्ताः सन्ति किन्नु, सांप्रतं इदानीं तेषां पुत्रदारस्वजनानां क्षेमं कुशलं अक्षेमं अकुशलं कथं कि-
स्विधा मे मम सुताः पुत्राः सत् वृत्तं येषां ते सद्वृत्ताः सत् समीचीनं वृत्तं व्यवहारः दुर्वृत्ताः दुष्ट
वृत्तं येषां ते दुर्वृत्ताः वृत्तं व्यवहारः ॥ २१ ॥
राजोवाच । यैरिति हे वैश्यवर्य धनैः पुत्रदारादिभिः यैः भवान् निरस्तः तेषु भवतः मानसं
स्नेहं किं अनुबध्नाति धनैः द्रव्यैः लुब्धैः लोभापमानैः पुत्रदारादिभिः पुत्राश्च दाराश्च ते पुत्रदा-

रा: पुत्रदारा: ...दर्थवां ते पुत्रदारादय: तै: पुत्रदारादिभि: दारा: कलत्राणि भवान् त्वं निरस्त: दूरीकृत: तिरस्कृत: तेषु पुत्रदारस्वजनेषु भवत: तव मानसं मन: अन्त:करणं स्नेहं प्रीतिं किं अनुबध्नाति, वैश्यउवाच, अहं किं करोमि भवान् त्वं अस्मद्गतं अस्मदीय विषयकं वच: वाक्यं यथा प्राह कथितवान् एवं एतत् तथैवास्ति मन: अन्त:करणं निष्ठुरतां निष्ठुरस्यभाव: निष्ठुरता

कथन्तेकिन्नु सद्वृत्तादुर्वृत्ता:किन्नुमेसुता: ॥ राजोवाच, यैर्निरस्तोभवांल्लुब्धै:पुत्रदारादिभिर्धनै: ॥ २२ ॥ तेषुकिंभवत:स्नेहमनुबध्नातिमानसं, वैश्यउवाच, एवमेतद्यथाप्राहभवानस्मद्गतं वच: ॥ २३ ॥ किंकरोमिनवध्नातिममनिष्ठुरतांमन: यै:संत्यज्य पितृस्नेहंधनलुब्धैर्निराकृत: ॥ २४ ॥ * * *

तां निष्ठुरतां निष्ठुरस्य कठोरस्य भाव: धर्म: न बध्नाति न करोति किं करोमि ॥ २३ ॥ यैरिति हे राजन् धनलुब्धै: यै: पितृस्नेहं किंच पतिस्वजनहार्दं सन्त्यज्य अहं निराकृत: तेषु मे मन: हार्दैव धनलुब्धै: धनै: लुब्धा: धनलुब्धा: तै: धनलुब्धैर्लुब्धा लोभ्यमाना: यै: पुत्रदारस्वजनै: पितृस्नेहं पितु: स्नेह: पितृस्नेह: तं पितृस्नेहं स्नेह: प्रीति: पतिस्वजनहार्दं पतिश्च स्वजनश्च पति-

स्वजनौ पतिस्वजनयोः हार्दं पतिस्वजनहार्दं पतिः स्वामी स्वज[illegible] वंधुवर्गः हार्दं स्नेहः सन्त्यज्य त्यक्ता निराकृतः दूरीकृतः तेषु पुत्रदारस्वजनेषु मत्तः अन्तःकरणं हार्देव स्नेहयुक्तमेव ॥ २४ ॥ - किमेतदिति हे महामते हे राजन् तेषां दोषं जानन्नपि अहं यत् विगुणेषु अपि वंधुषु प्रेमप्रवणं चित्तं करोमि एतत् किं अहं न अभिजानामि हे महामते महती मतिर्यस्य सः महामतिः तत्स-म्बोधने हे महामते मतिः बुद्धिः तेषां पुत्रदारस्वजनानां जानन् जानातीति जानन् विगुणेषु विगतः गुणो येभ्यः ते विगुणाः तेषु विगुणेषु वंधुषु भ्रातृषु प्रेमप्रवणं प्रेम्णा प्रवणं प्रेमप्रवणं तत्

पतिस्वजनहार्दं चहार्दिं तेष्वेवमेमनः ॥ किमेतन्नाभिजानामि जानन्नपिमहामते ॥ २५ ॥ यत्प्रेमप्रवणंचित्तंविगुणेष्वपिवंधुषुतेषांकृतेमेनिःश्वासोदौर्मनस्यञ्चजायते ॥ २६ ॥ * *

प्रेमवणं प्रेम्णा प्रीत्या प्रवणं आसक्तं चित्तं अन्तःकरणं किं किमस्ति न अभिजानामि न जानामि ॥ २५ ॥ तेषामिति हे राजन् तेषां कृते मे निःश्वासः किञ्च दौर्मनस्यं जायते यत् अप्रीतिषु तेषु अपि मनः निष्ठुरं न भवति किं करोमि तेषां पुत्रदारस्वजनानां कृते निमित्तं अर्थे मे मम दुःखितं मनो यस्य सः दुर्मनाः दुर्मनसः भावः दौर्मनस्यं मनः अन्तःकरणं अप्रीतिषु नास्ति प्रीति-र्येषां ते [illegible] तेषु अप्रीतिषु तेषु पुत्रदारस्वजनेषु मनः अन्तःकरणं निष्ठुरं कठोरं न भवति ॥

२६ ॥ म[illegible]उवाच, ततइति हे विप्र हे द्विज हे मुने ततः तौ सहितौ मुनिं तं समुपस्थितौ तौ कौ एकः समाधिः नाम असौ वैश्यः किञ्च अपरः पार्थिवसत्तमः स इत्यन्वयः ततः तदनन्तरं परस्परावभाषणानन्तरं सहितौ मित्रत्वेन सङ्गतौ तौ द्वौ तं मेधसं समुपस्थितौ सप्रसन्नौ प्राप्तौ समाधिर्नाम समाधिनामा:अपरः अन्यः पार्थिवसत्तमः पृथिव्याः ईश्वराः पार्थिवा पार्थिवेषु सत्तमः पार्थिवसत्तमः पृथिव्याः भूमेः ईश्वराः स्वामिनः पार्थिवेषु राजसु सत्तमः श्रेष्ठः सः राजा सुरथ-रित्यर्थः ॥ २७ ॥

करोमिकिंयन्नमनस्तेष्वप्रीतिषुनिष्ठुरं, मार्कण्डेयउवाच, ततस्तौसहितौविप्रतंमुनिंसमुपस्थितौ ॥ २७ ॥ समाधिर्नामवैश्योसौसचपार्थिवसत्तमः कृत्वातुतौयथान्यायंयथार्हंतेनसंविदं २८

कृत्वेति हे मुने यथान्यायं तु पुनः यथार्हं तेन सह सम्विदं कृत्वा उपविष्टौ तौ वैश्यपार्थिवौ कास्त्रिकथाः चक्रतुः यथान्यायं यथाशास्त्रं यथायोग्यं तेन मुनिना सम्विदं भाषणं उपविष्टौ संस्थितौ पृथिव्याः ईश्वरः पार्थिवः वैश्यश्च पार्थिवश्च तौ वैश्यपार्थिवौ पृथिव्याः भूमेः ईश्वरः स्वामी पार्थिवः राजासुरथः काश्चित् स्वपरविषयाः कथा वार्त्ताः ॥ २८ ॥ राजोवाच, भगवन्निति हे भगवन् अहं त्वां एकं प्रष्टुं इच्छामि तदाह स्वचित्तायत्ततां विना [illegible]मनसः यत् दुःखं भवति तत्

त्वं वदस्व हे मुने एकं रहस्यं तदाह स्वचितायततांविना [illegible]ज्यतस्य भावः आयतता स्वस्य चित्तं स्वचित्तं स्वचित्तस्य आयत्ततां स्वचित्तायततां आयतस्य पराधीनस्य भावः धर्मः चित्तं अन्तःकरणं आयतता निरोधः विना रहितः मे मम मनसः अन्तःकरणस्य वदस्व कथय ॥ २९ ॥ दुःखहेतुमा-ह ममत्वमिति हे मुनिसत्तम राज्यस्य किञ्च अखिलेषु अमदीयत्वं जानतः अपि मम अज्ञस्य यथा मम त्वं भवति एतत् किं भवतीत्यन्वयः मुनिषु सत्तमः मुनिसत्तमः तत्सम्बोधने हे मुनिसत्तम सत्तमः श्रेष्ठः राज्यस्येति सप्तम्यर्थस्य शेषत्वविवक्षायां षष्ठी राज्ये इत्यर्थः राज्यस्य राज्ये अखिलेषु

**उपविष्टौकथाःकाश्चिच्चक्रतुर्वैश्यपार्थिवौ, राजोवाच, भगवंस्त्वा**
**महंप्रष्टुमिच्छाम्येकंवदस्वतत् ॥ २९ ॥ दुःखाययन्मेमनसःस्वचि-**
**त्तायततांविना ममत्वंममराज्यस्यराज्यांगेष्वखिलेष्वपि ॥ ३० ॥**

समस्तेषु राज्यांगेषु राज्यस्य अङ्गानि राज्यांगानि तेषु राज्यांगेषु अङ्गानि स्वाम्यमात्यादीनि अम-दीयत्वं नमदीयः अमदीयः अमदीयस्य भावः धर्मः जानतः जानातीति जानन् तस्य जानतः जा-नातीति ज्ञः अज्ञः तस्य अज्ञस्य तथा युवार्थे ममता ॥ ३० ॥

नाहमेव तथा अयमपीत्याह अयंचेति हे मुने यद्यपि पुत्रैः किञ्च दारैः निरस्तः तथा भृत्यैः उ-ज्झितः [illegible]ाभिमतो[illegible]जनेन सन्त्यक्तः अयं तथापि तेषु अतिहार्दी भवति इत्यन्वयः दारैः कलत्रैः नि-

कृता [illegible] भृत्यैः सेवकैः उज्झितः त्यक्तः स्वजनेन बन्धुजनेन सन्त्यक्तः दूरीकृतः अयं वैश्यः तेषु पुत्रदारस्वजनादिषु अति अत्यन्तं हार्दी स्नेहयुक्तः ॥ ३१ ॥ एवमिति हे मुने एवं दृष्टदोषे अपि विषये ममत्वाकृष्टमानसौ अपि द्वौ अत्यन्तदुःखितौ भवतः द्वौ कौ एकः एषः तथा च अपरः अहं इत्यन्वयः एवं पूर्वोक्तप्रकारेण दृष्टः दोषो यस्मिन्सः दृष्टदोषः तस्मिन् दृष्टदोषे विषये राज्यपुत्रादौ ममत्वाकृष्टमानसौ ममत्वेन आकृष्टं मानसं ययोः तौममत्वाकृष्टमानसौ ममत्वेन ममतया आ-

**जानतोपियथाज्ञस्यकिमेतन्मुनिसत्तम ॥ अयञ्चनिकृतःपुत्रैर्दारै र्भृत्यैस्तथोज्झितः ॥ ३१ ॥ स्वजनेनचसंत्यक्तस्तेषुहार्दीतथाप्य ति एवमेषतथाहंचद्वावप्यत्यन्तदुःखितौ॥ ३२ ॥ दृष्टदोषेपिवि षयेममत्वाकृष्टमानसौ तत्कि नैतन्महाभागयन्मोहोज्ञानिनोर-**

कृष्टं विषयाधीनं कृतं मानसं अन्तःकरणं एकः एषः वैश्यः तथाच तथैव अपरः अन्यः ॥ ३२ ॥ तत् किमिति हे महाभाग हे मुने ज्ञानिनो अपि मम किञ्च अस्य यत् मोहः भवति एषा एतत् केन भवति एषा एतत् मूढता अविवेकांधस्य भवति ज्ञानमस्ति ययोः तौ ज्ञानिनौ तयोः ज्ञानिनोः अस्य वैश्यस्य मोहः अज्ञानं केन प्रकारेण एतत् एतत्ज्ञातीया मूढता मूढस्य भावः मूढता मूढस्य अज्ञानिनः भावः धर्मः अविवेकांधस्य न विवेकः अ मनुजेन अन्धः अविवेकांधः तस्य अ-

विवेकांधस्य ॥ ३३ ॥ अत्रोत्तरमाह, ऋषिरुवाच, हे महाभाग हे राजन् विषएवतिविषयिनमनुव-
ध्नातीति विषयः गोसु इन्द्रियमार्गेषु चरतीति गोचरः वि[illegible]ष्यासौ गोचरश्च विषयगोचरः तस्मिन्
विषयगोचरे समस्तस्य जन्तोः ज्ञानं अस्ति एवं विषयः समस्तस्य सर्वस्य जन्तोः प्राणिनः एवं व-
क्ष्यमाण प्रकारेण पृथक् भिन्नप्रकारेण याति ज्ञानविषयत्वं प्राप्नोतीत्यर्थः ॥ ३४ ॥
तदेवाह दिवांध इति हे राजन् केचित् प्राणिनः दिवा अन्धा भवन्ति तथा अपरे प्रा-

पि ॥ ३३ ॥ ममास्यचभवत्येषाविवेकांधस्यमूढता ऋषिरुवाच,
ज्ञानमस्तिसमस्तस्यजन्तोर्विषयगोचरे ॥ ३४ ॥ विषयश्चमहा
भागयातिस्चैवंपृथक्पृथक् दिवांधाःप्राणिनःकेचिद्रात्रावन्धास्त
थापरे ॥ ३५ ॥ * * * * * *

णिनः रात्रौ अन्धाः भवन्ति केचित् प्राणिनः दिवा तथा रात्रौ तुल्यदृष्टयः भवन्ति प्राणिनः
प्राणोस्ति येषां ते प्राणिनः प्राणिनः उलूकादयः दिवा दिवसे अन्धाः ज्ञानभाववन्तः अपरे अन्ये
प्राणिनः काकादयः रात्रौ अन्धाः ज्ञानभाववन्तः प्राणिनःमार्जारादय रात्रौ दिवसे तुल्यदृष्टयः तु-
ल्या दृष्टिर्येषां ते तुल्यदृष्टयः तुल्या समाना तुल्यदृष्टयः अन्धाः अनन्धाश्च ॥ ३५ ॥ ननु मनुष्या
एव [illegible] प्रत्युत्तेनाभिमताश्चित्तत्राह ज्ञानिन इति हे राजन् मनुजाः ज्ञानिनः भवन्ति ते मतं सत्यं

भवन्ति पशुभिःसम[illegible]ानः केवलं हि न भवन्ति किन्तु भवन्तीत्यर्थः किन्तु अज्ञानसम्वलितज्ञानिनः भवन्तीत्यर्थः कुतः यतः सर्वे पशुपक्षिमृगादयः हि ज्ञानिनः भवन्तीत्यन्वयः मनुजा मनुष्या ज्ञानमस्ति येषां ते ज्ञानिनः ते तत्र ते मनुजाः मनुष्याः ज्ञानिनः केवलं ज्ञानिनः एव हीति निश्चयेन न भवन्तीत्यर्थः अज्ञानसम्वलितज्ञानिनः भवन्तीत्यर्थः कुतः कस्मात् कारणात् यतः यस्मात् कारणात् सर्वे सम्पूर्णाः पशुपक्षिमृगादयः पशुश्च पक्षीच मृगश्च ते पशुपक्षिमृगाः पशुपक्षिमृगाः आदिर्येषां ते पशुपक्षिमृगादयः हीति निश्चयेन ज्ञानिनः भवन्तीत्यर्थः ॥ ३६ ॥

**केचिद्दिवातथारात्रौप्राणिनस्तुल्यदृष्टयः ज्ञानिनोमनुजाःसत्यं किन्तुतेनहिकेवलं ॥ ३६ ॥ यतोहिज्ञानिनःसर्वेपशुपक्षिमृगाद यः ज्ञानंचतन्मनुष्याणांयत्तेषांमृगपक्षिणां ॥ ३७ ॥** * *

ज्ञानंचेति हे राजन् किञ्च यत् ज्ञानं मनुष्याणां भवति तत् ज्ञानं तेषां मृगपक्षिणां भवति किञ्च यत् मनुष्याणां भवति तत्तेषां भवति तथा अन्यत् उभयोः तुल्यं भवति यत् यादृशं ज्ञानं तत् तादृशं ज्ञानं तेषां मृगपक्षिणां मृगाश्च पक्षिणश्च ते मृगपक्षिणः तेषां मृगपक्षिणां किञ्च यत् गमनादिकं तत् गमनादिकं तेषां मृगपक्षिणां अन्यत् आहारादिकं उभयोः मनुष्यपक्षिणोः तुल्यं धारणं सदृशमित्यर्थः तथा आहारनिद्राभयमैथुनं च समानमेतत्पशुभिर्नराणां ज्ञानविशेषोप्यधिकोनराणांज्ञानेन-

हीनः पशुभिः समानरित्यर्थः ॥ ३७ ॥ अर्थक्रियासाम्यान्तरयोरस्तीत्याह ज्ञानेपीति हे राजन् ज्ञाने
सत्यपि त्वं एतान् पतङ्गान् पश्य कथं भूतान् पतङ्गान् मोहात् शावचंचुषु कणमोक्षादृतान् पुनः
कथं भूतान् क्षुधा अपिपीड्यमानान् इत्यन्वयः पतङ्गान् पक्षिणः पश्य अवलोकय शावचञ्चुषु शावा-
नां चञ्चवः शावचञ्चवः तेषु शावचंचुषु शावानां बालकानां कणमोक्षादृतान् कणानां मोक्षः कणा-
मोक्षः कणमोक्षे आदृताः कणमोक्षादृताः तान् कणमोक्षादृतान् मोक्षः दानं आदृता तत्पराः पी-
ड्यमानान् पीड्यन्ते इतिपीड्यमानाः तान् पीड्यमानान् ॥ ३८ ॥

मनुष्याणांचयत्तेषांतुल्यमन्यतथोभयोः ज्ञानेपिसतिपश्यैतान्
पतङ्गाञ्छावचंचुषु ॥ ३८ ॥ कणमोक्षादृतान्मोहात्पीड्यमानान
क्षुधा ॥ मानुषामनुजव्याघ्रसाभिलाषाःसुतान्प्रति ॥ ३९ ॥

स्वशरीरापेक्षया बहिरंगेष्वपि अतिप्रीतिरिति तेषु मोहज्ञानयोः समानाधिकरण्यमुपपाद्य मनु-
ष्येष्वप्याह मानुषा इति हि मनुजव्याघ्र हे राजन् मानुषाः लोभात्सुतान् प्रति साभिलाषाः भ-
वन्ति एतेन प्रत्युपकाराय न भवन्ति इदं त्वं किं न पश्यसि हे मनुजव्याघ्र मनुजेषु व्याघ्रः मनु-
जव्याघ्रः तत्सम्बोधने हे मनुजव्याघ्र मनुजेषु मनुष्येषु व्याघ्रः श्रेष्ठः मानुषाः मनुष्याः लोभात्
प्रत्युपकारलोभात् सुतान् पुत्रान् साभिलाषाः वर्त्तमानाः युक्ताः एते सुताः पुत्राः ननु निश्चयेन

अत्र अन्येन वर्



न पश्यसि नै इच्छासि ॥ ३९ ॥ नन्वेवं विध व्यवहारादर्शिनां संसारे विरतिः कुतो नेत्यत आह तथापीति हे राजन् एवम्विधलोकव्यवहारसाचात्कारो भवति यद्यपि तथापि महामायाप्रभावेण ममतावर्त्ते मोहगर्त्ते निपातिता: मनुष्याः संसारस्थितिकारिणः भवन्ति इत्यन्वयः महती माया यस्याः सा महामाया महामायायाः प्रभावः महामायाप्रभावः तेन महामायाप्रभावेण प्रभावः अनुभावः ममतावर्त्ते ममतैव आवर्त इव आवर्तो यस्मिन्सः ममतावर्तः तस्मिन्ममतावर्त्ते आवर्तः भ्रमः मोहगर्त्ते मोह एव गर्तः मोहगर्तः तस्मिन्मोहगर्त्ते गर्तः ह्रदः मानुषाः मनुष्याः संसारस्थितिकारिणः

**लोभात्प्रत्युपकारायनन्वेतेकिन्नपश्यसि तथापिममतावर्त्तेमो हगर्त्तेनिपातिताः ॥ ४० ॥ महामायाप्रभावेणसंसारस्थिति कारिणः ॥ तन्नात्रविस्मयःकार्योयोगनिद्राजगत्पतेः ॥ ४१ ॥**

संसारे स्थितिः संसारस्थितिः संसारस्थितिं कुर्वंतीति संसारस्थितिकारिणः संसारे भवसागरे ॥ ४० ॥ ननु मायाया आश्चर्यं सत्तिरत आह तदिति हे राजन् तत् त्वया अत्र विस्मयः न कार्यः किंच जगत्पतेः हरेः या योगनिद्रा महामाया या भवति तया एतत्जगत्सम्मोह्यते तत् तस्मात्कारणात् अत्र अस्मिन् विषये विस्मयः आश्चर्यः जगत्पतेः जगतां पतिः जगत्पतिः तस्य जगत्पतेः जगतां चतुर्दश-लोकानां पतिः स्वामी हरेः विष्णोः या योगनिद्रा तमप्रधानशक्तिः महामाया महती माया यस्याः

सा महामाया तया महामायया ॥ ४१ ॥ भवादृशानां संसारिणां कावार्त्ता अपक्वकषायाणां यो-
गिनां अपि सा मोहिकेत्याह ज्ञानिनामपीति हे राजन् देवी भगवती महामाया ज्ञानिनां अपि चे-
तांसि बलात् मोहाय हि प्रयच्छति दीव्यन्ते इति देवी दीव्यते दीप्यमाने भगवती भगमस्ति यस्याः
सा भगवती भगं षडैश्वर्यं महामाया महती माया यस्याः सा महामाया महती अघटितघटना
पटीयसी ज्ञानिनां ज्ञानमस्ति येषां ते ज्ञानिनः तेषां ज्ञानिनां चेतांसि मनांसि बलात् बलात्कारात्
हीति निश्चयेन प्रयच्छति मोहायत्तानि करोतीत्यर्थः ॥ ४२ ॥ तत्कुत इत्यत आह तयेति हे राजन् तया

**महामायाहरेश्चैतत्तयासम्मोह्यतेजगत् ज्ञानिनामपिचेतांसि**
**देवीभगवतीहिसा ॥ ४२ ॥ बलादाकृष्यमोहायमहामायाप्र**
**यच्छति तयाविसृज्यतेविश्वंजगदेतच्चराचरं ॥ ४३ ॥** *

विश्वं चराचरं एतत् जगत् विसृज्यते किञ्च सा एषा मुक्तये उपासनादिभिः स्वार्पितनित्यकर्मादि-
भिश्च प्रसन्ना सती नृणां वरदा भवतीत्यन्वयः तया महामायया विश्वं समस्तं चराचरं स्थावरजङ्ग-
मात्मकं विसृज्यते उत्पाद्यते एषा महामाया मुक्तये मोचाय नृणां मनुष्याणां वरदा वरं ददातीति
वरदा वरं वरदानमित्यर्थः ॥ ४३ ॥ * * *
नन्वेकस्यैव [illegible]नो बन्धमोचोभयहेतुतानुपपन्नेत्यत आह साविद्येति हे राजन् सा परमा विद्या

भवति किञ्च [illegible] हेतुभूता भवति किञ्च सनातनी भवति संसारबन्धहेतुः भवति सा एव सर्वेश्वरेश्वरी भवतीत्यन्वयः सा महामाया परमा उत्तमपुरुषार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपा सनातनी अनादिः संसारबन्धहेतुः संसारस्य बन्धः संसारबन्धः संसारबन्धस्य हेतुः संसारबन्धहेतुः हेतुः हेतुभूता सा एव महामाया एव सर्वेश्वरेश्वरी सर्वेषां ईश्वरः सर्वेश्वरः सर्वेश्वरस्य ईश्वरी सर्वेश्वरेश्वरी सर्वेषां ब्रह्मादीनां ईश्वरः स्वामी सर्वेश्वरस्तस्य सदाशिवस्य ईश्वरी ईश्वरत्वसंपादिका इत्यर्थः ॥ ४४ ॥ विशेषजिज्ञासया पुनः पृच्छतीति, राजोवाच, हे भगवन् हे द्विज भगवन् यां देवीं

सैषाप्रसन्नावरदानृणांभवतिमुक्तये साविद्यापरमामुक्तेर्हेतुभूतासनातनी ॥ ४४ ॥ संसारबन्धहेतुश्चसैवसर्वेश्वरेश्वरी, राजोवाच, भगवन्काहिसादेवीमहामायेतियांभवान् ॥ ४५ ॥ *

महामाया इति हि ब्रवीति सा का भवति किञ्च सा कथं उत्पन्ना भवति अस्याः कर्म किं भवतीत्यन्वयः भवान् त्वं यां देवीं होति निश्चयेन सा देवी कथं केन प्रकारेण अस्याः देव्याः ॥ ४५ ॥ यत्प्रभावेति हे ब्रह्मविदांवर सा देवी यत्प्रभावा भवति किञ्च यत्स्वरूपा भवति किञ्च यदुद्भवा भवति तत्सर्वं अहं त्वत्तः श्रोतुं इच्छामीत्यन्वयः हे ब्रह्मविदांवर ब्रह्मविदन्तीति ब्रह्मविदः तेषां ब्रह्मविदां विदन्ति जानन्ति वरः श्रेष्ठः तत्सम्बोधने हे ब्रह्मविदांवर यत्प्रभावा यत् प्रभावो यस्याः सा

यत्प्रभावा यत् ईदृशः यत्स्वरूपा यत् स्वरूपं यस्याः सा यत्स्वरूपा यत् ईदृशं यदुद्भवा यत् उद्भवो
यस्याः सा यदुद्भवा यत् ईदृशः उद्भवः प्रादुर्भावः तत्सर्वं ॥ ४६ ॥
उत्तरयति, ऋषिरुवाच, नित्यैवसेति हे राजन् जगन्मूर्त्तिः सा नित्या एव भवति तया यद्यपि
सर्वं इदं ततं तथापित्वया तत्समुत्पत्तिः बहुधा मम श्रूयतां इत्यन्वयः जगन्मूर्त्तिः जगदाश्रयभूता
शक्तिः सा महामाया तया महामायया सर्वं समस्तं इदं जगत् ततं विस्तारितं तत्समुत्पत्तिः तस्याः
समुत्पत्तिः तस्याः महामायायाः समुत्पत्तिः प्रादुर्भावः बहुधा अनेकप्रकारेण मम मत्तः समेत्यपा-

**ब्रवीतिकथमुत्पन्नासाकर्मास्याश्चकिंद्विज यत्स्वभावाचसादेवीय**
**त्स्वरूपायदुद्भवा ॥ ४६ ॥ तत्सर्वंश्रोतुमिच्छामित्वत्तोब्रह्मविदांव**
**र ऋषिरुवाच, नित्यैवसाजगन्मूर्त्तिस्तयासर्वमिदंततं ॥ ४७**

दानस्य शेषत्वविवक्षायां षष्ठी मत्त इत्यर्थः ॥ ४७ ॥ देवानां कार्यसिद्ध्यर्थमिति हे राजन् यदा सा
देवानां कार्यसिद्ध्यर्थं आविर्भवति तदा लोके जनैः नित्या अपि सा उत्पन्ना इति अभिधीयते इ-
त्यन्वयः सा महामाया आविर्भवति प्रकटी भवति सा महामाया अभिधीयते कथ्यते ॥ ४८ ॥ क-
थंकेन कया प्रार्थनया तत्कार्यसिद्ध्यर्थमवतार इति जिज्ञासां निवर्तयितुं मोहकारस्यैव च राजा-
पृष्टत्वेनादौ [illegible]कायास्तमोगुणप्रधानाया अवतारं वक्तुमितिहासमाह योगनिद्रामिति हे राज-

न् यदा कल्प[illegible]र्णांत एकार्णवीकृते सति भगवान्प्रभुः शेषं आस्तीर्य योगनिद्रां अभजन् कल्यां-ते ब्रह्मदिनांते एकार्णवीकृते सति एकः अर्णवो यस्मिन् सः एकार्णवी कृतः तस्मिन् एकार्णवीकृते अर्णवः समुद्रः सप्तसमुद्रः मिलित्वा एकार्णवः कृतः जातः भगवान् भगं विद्यते यस्य सः भगवान् भगं षडैश्वर्यं प्रभुः कर्तुं अकर्तुं अन्यथाकर्तुं समर्थः आस्तीर्य शय्यां योगनिद्रां तमःप्रधानां शक्तिं ॥ ४९ ॥

तथापितत्समुत्पत्तिर्बहुधाश्रूयतांमम देवानांकार्यसिद्ध्यर्थमावि र्भवतिसायदा ॥ ४८ ॥ उत्पन्नेतितदालोकेसानित्याप्यभिधी- यतेयोगनिद्रांयदाविष्णुर्जगत्येकार्णवीकृते ॥ ४९ ॥ आस्तीर्यशेष मभजत्कल्पांतेभगवान्प्रभुः तदाद्वावसुरौघोरौविख्यातौमधुकै

तदेति हे राजन् तदा विष्णुकर्णमलोद्भूतौ मधुकैटभौ विख्यातौ घोरौ द्वौ असुरौ ब्रह्माणं हन्तुं उद्यतौ विष्णुकर्णमलोद्भूतौ विष्णोः कर्णौ विष्णुकर्णौ विष्णुकर्णयोः मलं विष्णुकर्णमलं विष्णुकर्णम- लात् उद्भूतौ विष्णुकर्णमलोद्भूतौ कर्णौ श्रवणौ उद्भूतौ उत्पन्नौ मधुकैटभौ मधुश्च कैटभश्च तौ मधु- कैटभौ मधुः मधुनामकैटभः कैटभनामाविख्यातौ प्रसिद्धौ घोरौ भयंकरौ द्वौ असुरौ दैत्यौ हंतुं

प्रहर्तुं उद्यतौ तत्परौ जातौ ॥ ५० ॥ ब्रह्माणमित्यत आह सनाभीति हे राजन् विष्णोः नाभिकमले स्थितः प्रजापतिः सः ब्रह्मा उग्रौ तौ असुरौ दृष्ट्वा जनार्दनं प्रसुप्तं दृष्ट्वा एकाग्रहृदयः स्थितः सन् हरेर्विबोधनार्थाय हरिनेत्रकृतालयां तां योगनिद्रां तुष्टाव नाभिकमले नाभौ कमलं नाभिकमलं तस्मिन् नाभिकमले कमलं पद्मं प्रजानां पतिः प्रजापतिः प्रजानां जनानां लोकानां पतिः स्वामी उग्रौ भयङ्करौ तौ असुरौ दैत्यौ जनार्दनः जनान् अर्दयति जनार्दनः तं जनार्दनं जनान् दुष्टज-

**टभौ ॥ ५० ॥ विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः ॥ ५१ ॥ दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तं च जनार्दनम् तुष्टाव योगनिद्रां तामेकाग्रहृदयस्थितः ॥ ५२ ॥ विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् । विश्वेश्व-**

नान् अर्दयति जनार्दनं विष्णुं प्रसुप्तं त्यक्तपालनव्यवहारं एकाग्रहृदयस्थितः सन् एकाग्रं हृदयं यस्य सः एकाग्रहृदयः एकाग्रं अनन्यनिष्ठं हरेर्विष्णोः प्रबोधनार्थाय पालनव्यवहारप्रवृत्त्यर्थं हरिनेत्रकृतालयां हरेः नेत्रे हरिनेत्रे हरिनेत्रयोः कृतः आलयो यया सा हरिनेत्रकृतालया तां हरिनेत्रकृतालयां हरेः विष्णोः आलयः स्थानं तां योगनिद्रां तमःप्रधानांशक्तिं तुष्टाव स्तुतिं चकार ॥ ५१ ॥

योगनिद्रायाः [illegible]शक्त्या भेदं मत्वा विशेषयति विश्वेश्वरीमिति कथं भूतः ब्रह्मा तेजसः प्रभुः

समर्थः कथं [illegible] योगनिद्रां जगद्धात्रीम् जगतां धात्री जगद्धात्री ताम् जगद्धात्रीम् जगतां चतुर्दशलोकानां धात्री जननी माता पुनः कथं भूतां योगनिद्रां स्थितिसंहारकारिणीम् स्थितिश्च संहारश्च स्थितिसंहारौ करोतीति स्थितिसंहारकारिणी ताम् स्थितिसंहारकारिणीम् पुनः कथं भूतां योगनिद्रां भगवतीम् भगं विद्यते यस्याः सा भगवती ताम् भगवतीम् भगं षडैश्वर्यम् पुनः कथं भूतां योगनिद्रां विष्णोः अतुलां निद्रां अतुलां महतीम् ॥ ५३ ॥ कथं तुष्टावेत्याह, ब्रह्मोवाच, त्वमिति हे अक्षरे नित्ये त्वं स्वाहा असि हे अक्षरे उपचयापचयहीने हे नित्ये जन्मनाश-

**रींजगद्धात्रींस्थितिसंहाकारिणीं ॥ ५३ ॥ निद्रांभगवतींविष्णो-रतुलांतेजसःप्रभुः, ब्रह्मोवाच, त्वंस्वाहात्वंस्वधात्वंहिवषट्का-रःस्वरात्मिका ॥ ५४ ॥**

* * * *

हीने स्वाहा देवहविर्दानमंत्रः अग्निपत्नी असि त्वं स्वधा असि स्वधा पितृहविर्दानमन्त्रः पितृपत्नी च स्वधा असि त्वं वषट्कारः हि असि वषट्क्रियते यत्र सः वषट्कारः वषट्कारः यज्ञः असि यज्ञदेवाह्वानमन्त्रश्च असि त्वं स्वरात्मिका असि स्वराः आत्मा यस्याः सा स्वरात्मिका स्वराः षोडशाः च आत्मा स्वरूपं त्वं सुधा असि सुधा देवान्नं त्वं त्रिधा मात्रात्मिका स्थिता असि त्रिधा मात्राः आत्मा यस्याः सा त्रिधा मात्रात्मिका त्रिधा मात्रात्मिकया स्थिता त्रिधा तिस्रः

मात्रा: ह्रस्वदीर्घप्लुता: आत्मा स्वरूपं ॥ ५४ ॥ अर्द्धमात्रया स्थिता अर्द्धमात्रास्थिता त्वं अर्द्धमात्रास्थिता असि अर्द्धा चासौ मात्रा च अर्द्धमात्रा अर्द्धमात्रया व्यञ्जनरूपया त्वं नित्या असि नित्या परिणामादिरहिता या त्वं विशेषत: अनुच्चार्या अनुच्चार्या असि विशेषत: मात्रात्रयवैलक्षण्येन अनुच्चार्या उच्चारितुं योग्या उच्चार्या न उच्चार्या सा त्वं एव सावित्री असि सावित्री सवितु: प्रकाशिका सूर्यमण्डलस्थिता सूर्यप्रकाशिका असि सूर्यमण्डलस्थिता असि हे देवि त्वं परा जननी असि परा उत्कृष्टा जननी माता ॥ ५५ ॥ हे

अर्द्धमात्रास्थिता-

**स्वधात्वमक्षरेनित्येत्रिधामात्रात्मिकास्थिता**
**नित्यायानुच्चार्याविशेषत: ॥ ५५ ॥ त्वमेवसात्वंसावित्रीत्वंदेविज**
**ननीपरा त्वयैवधार्यतेसर्वंत्वयैतत्सृज्यतेजगत् ॥ ५६ ॥** *

देवि त्वया सर्वदा सर्वं एतत् जगत् धार्यते त्वया सर्वदा सर्वं एतत् जगत्सृज्यते त्वया सर्वदा सर्वं एतत् जगत् पाल्यते त्वं अन्ते सर्वदा सर्वं एतत् जगत् अत्सि सर्वदा सदा सर्वं समस्तं धार्यते भ्रियते सर्वदा सदा सर्वं समस्तं सृज्यते उत्पाद्यते सर्वदा सदा सर्वं समस्तं पाल्यते रक्षते अन्ते प्रलये संहारे सर्वदा सदा सर्वं समस्तं अत्सि भक्षयसि अग्निरूपेण आत्मसात्करोषि ॥ ५६ ॥ सृष्ट्यादि[illegible]प्रिल्वमेवेत्याह विसृष्टाविति जगन्मये त्वं विसृष्टौ अस्य जगत: सृष्टिरूपा असि

किन्तु त्वं [illegible] जगतः स्थितिरूपा असि ॥ ५७ ॥ तथेति हे जगन्मये तथा त्वं अन्ते अस्य जगतः संहृति रूपा अपि हे जगन्मये जगत् मयते इति जगन्मया तत्सम्बोधनं महाविद्या महावाक्यलक्षणा महती चासौ विद्याच महाविद्या महामाया हरेर्जगज्जननीशक्तिः महती चासौ माया च महामाया महामेधा धारणवतीबुद्धिः महती चासौ मेधा च महामेधा स्मृतिः अतीतानागतानेककल्पस्मरणरूपा महती चासौ स्मृतिश्च महास्मृतिः ॥ ५८ ॥

त्वयैतत्पाल्यतेदेवित्वमत्स्यन्तेचसर्वदा विसृष्टौसृष्टिरूपात्वंस्थितिरूपाचपालने ॥५७॥ तथासंहृतिरूपांतेजगतोस्यजगन्मये महाविद्यामहामायामहामेधामहास्मृतिः ॥५८॥ महामोहाचभवतीमहादेवीमहासुरी प्रकृतिस्त्वं चसर्वस्यगुणत्रयविभावि

महामोहा भवती त्वं महान्मोहो यस्याः सकाशात् सा महामोहा महादेवीमहादेवस्य भार्या महासुरी महदासुरी शक्तिस्त्वमेव सर्वस्य जगतः त्वं प्रकृतिः कारणभूता कीदृशी गुणत्रयविभाविनी गुणत्रयं सत्वरजस्तमोरूपं विभावयितुं शीलं यस्याः सा गुणत्रयं विभाविनी ॥ ५९ ॥ कालरात्रिः यमभगिनी प्रलयकाले महारात्रिः मोहरात्रिः महामोहरात्रिः महामोहकाले मोहरात्रिः अत एव

दारुणा भयानका त्वं श्रीः लक्ष्मीरूपा त्वमीश्वरी ऐश्वर्ययुक्ता त्वं ह्रीः मंत्रविशेषरूपा त्वं बुद्धि-रूपा कीदृशी बोधलक्षणा बोधो निर्णयात्मकं ज्ञानं लक्षणं रूपं यस्याः सा बोधलक्षणा ॥ ६० ॥ तथा लज्जा लज्जारूपा पुष्टिः पोषणस्वरूपा तुष्टिः सन्तोषस्वरूपा त्वमेव शांतिः विषयेभ्यः इन्द्रियो परतिस्वरूपाक्षांतिः सामर्थ्ये सत्यपि परापराधसहिष्णुत्वस्वरूपा खड्गिनी खड्गयुक्ता खड्गोऽस्ति यस्याः

नी ॥ ५९ ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्चदारुणा त्वंश्री स्त्वमीश्वरीत्वंह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥ ६० ॥ लज्जापुष्टिस्तथा तुष्टिस्त्वंशान्तिःक्षांतिरेवच खड्गिनीशूलिनीघोरागदिनीचक्रि णीतथा ॥ ६१ ॥ शङ्खिनीचापिनीबाणाभुशुण्डीपरिघायुधा सौ-म्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ॥ ६२ ॥ * *

सा खड्गिनी शूलिनी शूलमस्ति यस्याः सा शूलिनी घोरा एकहस्तस्थितिशिरसा भयङ्करी गदिनी गदा अस्ति यस्याः सा गदिनी तथा चक्रिणी चक्रमस्ति यस्याः सा चक्रिणी ॥ ६१ ॥ शङ्खिनी श-ङ्खोऽस्ति यस्याः सा शङ्खिनी चापिनी चापोऽस्ति यस्याः सा चापिनी बाणा बाणोऽस्ति यस्याः सा बाणा सर्वं आद्य[illegible] बाणभुशुण्डीपरिघायुधेतिपाठः बाणश्च भुशुण्डी च परिघश्च आयुधानि यस्याः

सा वाणभुशुण्डीपरिघायुधा सौम्या मनोज्ञा सौम्यतरा अतिशयेन सौम्यतरा सौम्येभ्यस्त्वतिसुन्दरी सर्वसौम्येभ्य: अतिसुन्दरी त्वमसि अशेषसौम्येभ्य: अशेषास्च ते सौम्याश्च अशेषसौम्या: तेभ्य: अशेषसौम्येभ्य: अतिसुन्दरी अतिशयेन सुन्दरी अतिसुन्दरी ॥ ६२ ॥ * * * *

परा त्वं परा असि परा श्रेष्ठा पराणां परमा त्वमेवासि पराणां उत्कृष्टानां परमा प्रधाना त्वमेवासि परमा स्यात्प्रधानायामिति धरणीकोश: कुत इत्यत आह परमेश्वरी यतस्त्वं परमेश्वरी असि परमा चासौ ईश्वरी च परमेश्वरी हे अखिलात्मिके यत्किञ्चिद्वस्तु सदसद्वा तच्च त्वमेवासि अखि-

**परापराणांपरमात्वमेवपरमेश्वरी यच्चकिञ्चित्क्वचिद्वस्तुसदसद्वाखिलात्मिके ॥ ६३ ॥ तस्यसर्वस्ययाशक्तिःसात्वंकिंस्तूयसेतदा ययात्वयाजगत्स्रष्टाजगत्पातात्तियोजगत् ॥ ६४ ॥** *

लं सर्वंआत्मास्वरूपं यस्या: सा अखिलात्मिका तत्सम्बोधनं अखिलात्मिके वस्तु प्रमेयं सत्चेतनवर्ग: असत्जडवर्ग: ॥ ६३ ॥ तस्येति तस्य सर्वस्य या शक्ति: सा त्वं तस्य सर्वस्य सदसद्रूपस्य वस्तुत: या शक्ति: सामर्थ्यं सा त्वमेवासि तदा किं स्तूयसे अपि तु स्तुत्यै वास्मदादीनां भवसि स्तोतृस्तुत्यतच्छक्तिस्तुतीनां त्वत्तोन्यत्वाभावाद्भेदनिबन्धनास्तुति: कथंस्यादितिभाव: स्तुत्यत्वाभावमेवपुनराह ययेति यया त्वया जगत्स्रष्टा जगत: स्रष्टा जगत्स्रष्टा ब्रह्मरूपेण उत्पादक: जगत्पाता जगत:

पाता जगत्पाता विष्णुरूपेण रक्षकः यः विष्णुः जगत् अत्ति रुद्ररूपेण संहरति ॥ ६४ ॥ सोपीति सः अपि यया त्वया निद्रावशं नीतः इह कः त्वां स्तोतुं ईश्वरः भवति हे देवि त्वया यतः विष्णुः किञ्च ईशानः एव ते शरीरग्रहणं कारिताः निद्रावशं नीतः निद्रायाः वशः निद्रावशः तं निद्राव- शं नीतः प्रापितः इह अस्मिन् स्तुतिविषये स्तोतुं स्तुतिः ईश्वरः समर्थः न कोपीत्यर्थः यतः यस्मात् कारणात् अहं ब्रह्मा ईशानः शिवः ते सर्वे शरीरग्रहणं शरीरस्य ग्रहणं शरीरग्रहणं तत् शरीरग्र-

## सोपिनिद्रावशंनीतःकस्त्वांस्तोतुमिहेश्वरः विष्णुःशरीरग्रहण- महमीशानएवच ॥ ६५ ॥ कारितास्तेयतोतस्त्वांकःस्तोतुंशक्ति मान्भवेत् सात्वमित्थंप्रभावैःस्वैरुदारैर्देविसंस्तुता ॥ ६६ ॥ मोहयैतौदुराधर्षावसुरौमधुकैटभौ प्रबोधंचजगत्स्वामीनीय

हणं कारिताः ॥ ६५ ॥ अतः कः त्वां स्तोतुं शक्तिमान् भवेत् हे देवि इत्थं उदारैः स्वैः प्रभावैः संस्तुता वा त्वं एतौ दुराधर्षौ मधुकैटभौ मोहय अतः अस्मात्कारणात् स्तोतुं स्तुतिशक्तिमान् समर्थः न कोपीत्यर्थः इत्थं एवं विधौः उदारैः असाधारणैः स्वकीयैः प्रभावैः महात्म्यैः संस्तुता स्तुतिः दुराधर्षौ मदोन्मत्तौ मधुकैटभौ असुरौ दैत्यौ ॥ ६६ ॥ हे देवि त्वया जगत्स्वामी अच्युतः

लघु प्रबोधं नीयतां किञ्च एतौ महासुरौ हंतुं अस्य बोधः क्रियतां लघु शीघ्रं जगत्स्वामी जगतां स्वामी जगत्स्वामी जगतां चतुर्दशलोकानां स्वामी ईश्वरः अच्युतः विष्णुः प्रबोधं जागरणं पालनीयमरूपं नीयतां प्रापय एतौ महासुरौ मधुकैटभौ दैत्यौ हंतुं प्रहर्तुं अस्य विष्णोः बोधः प्रवृत्तिः ॥ ६७ ॥ ऋषिरुवाच नेत्रास्येति हे राजन् तदा तत्र वेधसा विष्णोः प्रबोधनार्थाय मधुकैटभौ हंतुं एवं स्तुता तामसी देवी नेत्रास्यनासिकाबाहुहृदयेभ्यः तथा उरसः निर्गत्य अव्यक्तजन्मनः ब्रह्मणः

तामच्युतोलघु ॥ ६७ ॥ बोधश्चक्रियतामस्यहंतुमेतौमहासुरौ ऋषिरुवाच, एवंस्तुतातदादेवीतामसीतत्रवेधसा ॥ ६८ ॥ विष्णोःप्रबोधनार्थायनिहंतुंमधुकैटभौ नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ॥ ६९ ॥ * * * * *

दर्शने तस्थौ तत्र तस्मिन्समये वेधसा ब्रह्मणा प्रबोधनार्थाय निहंतुं प्रहर्तुं एवं पूर्वोक्तप्रकारेण तामसी तमः प्रधानाशक्तिः नेत्रास्यनासिकाबाहुहृदयेभ्यः नेत्रे नयने आस्यं मुखं उरसः वक्षस्थलात् अव्यक्तजन्मनः अव्यक्तात् जन्म यस्य सः अव्यक्त जन्मा तस्य अव्यक्तजन्मनः अव्यक्तात् ईश्वरात् जन्म प्रादुर्भावः ६८ । ६९ ॥

उत्तस्थौचेति हे राजन् तया मुक्तः जगन्नाथः जनार्दनः एकार्णवे अहिशयनात् उत्तस्थौ ततः सः तौ मधुकैटभौ ददृशे किञ्च तौ मधुकैटभौ तं ददृशाते तया योगनिद्रया मुक्तः त्यक्तः जगन्नाथः जगतां नाथः जगन्नाथः जगतां चतुर्दशलोकानां नाथः स्वामी जनार्दनः विष्णुः एकार्णवे एकश्चासौ अर्णवश्च एकार्णवः तस्मिन् एकार्णवे अर्णवः समुद्रः अहिशयनात् शेषशयनात् ततः तदनन्तरं उत्थानानन्तरं सः जनार्दनः विष्णुः तौ मधुकैटभौ तं जनार्दनं ॥ ७० ॥ तौ विशेषयति मध्विति कथं भूतौ मधुकैटभौ दुरात्मानौ पुनः कथंभूतौ मधुकैटभौ अतिवीर्य्यपराक्रमौ पुनः कथं भूतौ मधु-

**निर्गम्यदर्शनेतस्थौब्रह्मणोव्यक्तजन्मनः ॥ उत्तस्थौचजगन्नाथस्त यामुक्तोजनार्दनः ॥ ७० ॥ एकार्णवेहिशयनात्ततःसददृशेचतौ मधुकैटभौदुरात्मानावतिवीर्यपराक्रमौ ॥ ७१ ॥** * *

कैटभौ क्रोधरक्तेक्षणौ पुनः कथं भूतौ मधुकैटभौ ब्रह्माणं अत्तुं जनितोद्यमौ दुष्टः आत्मा ययोः तौ दुरात्मानौ दुष्टः कुटिलः आत्मा अन्तःकरणं अतिवीर्यपराक्रमौ वीर्यञ्च पराक्रमश्च तौ वीर्यपराक्रमौ अतिवीर्यपराक्रमौ ययोः तौ अतिवीर्यपराक्रमौ वीर्यं उत्साहः पराक्रमः शक्त्यतिशयः अति अत्यन्तं क्रोधरक्तेक्षणौ ययोः तौ क्रोधरक्तेक्षणौ ईक्षणे नेत्रे अत्तुं ग्रसितुं जनितोद्यमौ जनितः उद्यमौ याभ्यां तौ जनितोद्यमौ जनितः कृतः उद्यमः उद्योगः ॥ ७१ ॥ समुत्थायेति कालाध्वनोद्वितीया

...व अन्येन व...

हे राजन् प्रीतः समुत्थाय विभुः भगवान् हरिः वाहुप्रहरणः सन् पञ्चवर्षसहस्राणि ताभ्यां सह युयुधे ततः तदनन्तरं परस्परावलोकानन्तरं विभुः व्यापकः वाहुप्रहरणः वाहवः एव प्रहरणो यस्य सः वाहुप्रहरणः वाहवः एव भुजा एव पञ्चवर्षसहस्राणि पञ्चवर्षसहस्रपर्यन्तं ताभ्यां मधुकैटभाभ्यां ॥ ७२ ॥ * * * * * * * * * *

तावपीति अतिबलोन्मतौ महामायाविमोहितौ तौ अपि केशवं इति उक्तवन्तौ इतीति किं हे

**क्रोधरक्तेक्षणावत्तुंब्रह्माणंजनितोद्यमौ समुत्थायततस्ताभ्यांयु**
**युधेभगवान्हरिः ॥ ७२ ॥ पंचवर्षसहस्राणिवाहुप्रहरणोविभुः**
**तावप्यतिवलोन्मत्तौमहामायाविमोहितौ ॥ ७३ ॥ उक्तवन्तौ**
**वरोस्मत्तोव्रियतामितिकेशवं, श्रीभगवानुवाच, भवेतामद्यमे**

केशव त्वया अस्मत्तः वरः व्रियताम् अतिवलोन्मत्तौ अतिवलेन उन्मत्तौ अतिवलोन्मत्तौ अतिवलेन उन्मत्तौ गर्वितौ महामायाविमोहितौ महामायया विमोहितौ महामायाविमोहितौ तौ मधुकैटभौ केशवं के शेते असौ केशवः तं केशवं के जले अस्मत्तः आवाभ्यां वः इष्टोर्थः व्रियतां गृह्यतां ॥ ७३ ॥ भगवानुवाच, भवेतामिति हे मधुकैटभौ भवन्तौ अद्य मे तुष्टौ भवतः तदा उभौ अपि मम वध्यौ

भवेताम् अत्र अन्येन वरेण किं मम एतावत् हि वृत्तं अद्य यदा मे मद्यं तुष्टौ प्रसन्नौ उभौ द्वौ वध्यौ हंतुं योग्यौ वध्यौ हंतुं प्रहंतुं अत्र अस्मिन् वरदानविषये किं किम्प्रयोजनमस्ति मम मया वृत्तं इष्टं ममेति कर्तुः शेषत्वविवक्षायां षष्ठी ॥ ७४ ॥ ऋषिरुवाच, वञ्चिताभ्यामिति हे राजन् तदा वंचिताभ्यां ताभ्यां सर्वं जगत् आपोमयं विलोक्य कमलेक्षणः भगवान् गदितः इत्यन्वयः तदा तस्मिन्समये इतिपूर्वोक्तप्रकारेण ताभ्यां मधुकैटभाभ्यां सर्वं समस्तं आपोमयं आपोमयं

तुष्टौममवध्यावुभावपि ॥ ७४ ॥ किमन्येनवरेणात्रएतावद्धिवृ
तंमम, ऋषिरुवाच, वञ्चिताभ्यामितितदासर्वमापोमयंजगत्
७५ ॥ विलोक्यताभ्यांगदितोभगवान्कमलेक्षणः आवांजहिन
यत्रोर्वीसलिलेनपरिप्लुता ॥ ७६ ॥ * * *

अद्भिः प्रचुरं अपोमयं अद्भिः जलैः प्रचुरं व्याप्तं विलोक्य दृष्ट्वा कमलेक्षणः कमलमिव ईक्षणे यस्य सः कमलेक्षणः कमलमिव पद्ममिव ईक्षणे नेत्रे भगवान् भगं विद्यते यस्य सः भगवान् भगं षडैश्वर्यं भगवान् हरिः विष्णुः जनार्दनः गदितः उक्तः ॥ ७५ ॥

किङ्गदितस्तत्राह आवामिति हे केशव यत्र उर्वी सलिलेन परिप्लुता न भवति तत्र त्वं आवां

जहि हे केशव के शेते यसौ केशवः तत्सम्बोधने हे केशव उर्वी पृथिवी सलिलेन परिप्लुता व्याप्ता जहि प्रहरेत्यर्थः ॥ ७६ ॥ ऋषिरुवाच, तथेति हे राजन् तथा इति उक्त्वा शङ्खचक्रगदाभृता भगवता तयोः शिरसी जघने कृत्वा चक्रेण वै छिन्ने इत्यन्वयः तथा तथास्तु शङ्खचक्रगदाभृता शङ्खश्च चक्रश्च गदा च ताः शङ्खचक्रगदाः शङ्खचक्रगदाः बिभर्तीति शङ्खचक्रगदाभृत् तेन शङ्खचक्रगदाभृता

ऋषिरुवाच, तथेत्युक्त्वाभगवताशङ्खचक्रगदाभृता कृत्वाचक्रेण वैछिन्नेजघनेशिरसीतयोः ॥ ७७ ॥ एवमेषासमुत्पन्नाब्रह्मणा संस्तुतास्वयं प्रभावमस्यादेव्यास्तुभूयःशृणुवदामिते ॥ ७८ ॥

इति श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमहात्म्येमधुकैटभवधनामप्रथमोध्यायः ॥ १ ॥ * * * *

बिभर्ति धारयति भगवता विष्णुना तयोः शिरसी मस्तके वै इति निश्चयेन ॥ ७७ ॥ उपसंहरति एवमेषेति हे राजन् एवं ब्रह्मणा स्वयं संस्तुता एषा समुत्पन्ना भवति त्वं अस्याः देव्याः तु प्रभावं भूयः शृणु अहं ते वदामि एवं पूर्वोक्तप्रकारेण स्वयं स्वयमेव एषा देवी समुत्पन्ना प्रादुर्भूता प्रभावं महात्म्यं भूयः पुनः ते तुभ्यमित्यर्थः ॥ ७८ ॥ इति श्रीनागोजीभट्टसम्मतकृते सप्तशतीव्याख्याने

मधुकैटभवधो नाम प्रथमोऽध्यायः ॥ १ ॥ * * * * * * *

भूयः शृण्वित्युक्तं तत्रेतिहासमाह, ऋषिरुवाच, ऋषिः सुरथं प्राह देवासुरमिति हे राजन् पुरा महिषे असुराणां अधिपे सति किञ्च पुरन्दरे देवानां अधिपे सति पूर्णं अब्दशतं देवासुरं युद्धं अभूत् इत्यन्वयः पुरा पूर्वं महिषे महिषासुरे अधिपे सति किञ्च पुरन्दरे इन्द्रे अधिपे सति राज्ञे सति अब्दशतं अब्दानां शतं अब्दशतं अब्दानां वर्षाणां अब्दशतं शतवर्षपर्यंतं देवासुरं देवाश्च असुराश्च ते देवासुराः देवासुराः प्रहर्तारो यत्र तत् देवासुरयुद्धं संग्रामं ॥ १ ॥ तत्रेति हे राजन् तत्र

**ऋषिरुवाच, देवासुरमभूद्युद्धं पूर्णमब्दशतंपुरा महिषेसुराणा मधिपेदेवानांचपुरन्दरे ॥ १ ॥ तत्रासुरैर्महावीर्यैर्देवसैन्यंप- राजितं जित्वाचसकलान्देवानिन्द्रोभून्महिषासुरः ॥ २ ॥**

महावीर्यैः असुरैः देवसैन्यं पराजितं किञ्च सकलान् देवान् जित्वा महिषासुरः इन्द्रः अभूत् तत्र तस्मिन् युद्धे महावीर्यैः महत् वीर्यं येषां ते महावीर्याः तैः महावीर्यैः वीर्यं पराक्रमः असुरैः दैत्यैः देवानां सैन्यं देवसैन्यं किञ्च सकलान् समस्तान् इन्द्रः सुरराट् ॥ २ ॥ हे राजन् ततः पराजिताः देवाः प्रजापतिं पद्मयोनिं पुरस्कृत्य तत्र गताः तत्र कुत्र यत्र ईशगरुडध्वजौ तिष्ठतः ततः तदनन्तरं पलायन[illegible] प्रजापतिं प्रजानां पतिः प्रजापतिः तं प्रजापतिं प्रजानां लोकानां ज-

नानां पतिः [illegible] पद्मयोनिं पद्मं योनिर्यस्य सः पद्मयोनिः तं पद्मयोनिं पद्मं कमलं योनिः उ-
त्पत्तिस्थानं पद्मयोनिं ब्रह्माणं पुरस्कृत्य अग्रे कृत्य ईशगरुडध्वजौ ईशश्च गरुडध्वजश्च तौ ईशगरुड-
ध्वजौ ईशः शिवो गरुडध्वजः विष्णुरित्यर्थः ॥ ३ ॥ * * * * * *
यथावृत्तमिति हे भगवन्तौ त्रिदशाः तयोः तद्वत् यथावृत्तं देवाभिभवविस्तरं महिषासुरचेष्टितं क-
थयामासुः त्रिदशाः तिस्रः दशाः येषां ते त्रिदशाः तिस्रः दशाः अवस्थाः तयोः शिवविष्णो देवाभि-

ततःपराजितादेवाःपद्मयोनिंप्रजापतिं पुरस्कृत्यगतास्तत्रयत्रे-
शगरुडध्वजौ ॥ ३ ॥ यथावृत्तंतयोस्तद्वन्महिषासुरचेष्टितं त्रि
दशाःकथयामासुर्देवाभिभवविस्तरं ॥ ४ ॥ सूर्येन्द्राग्न्यनिलेंदू
नांयमस्यवरुणस्यच अन्येषाञ्चाधिकारान्सस्वयमेवाधितिष्ठति

भवविस्तरं देवानांमभिभवः देवाभिभवः देवाभिभवस्य विस्तरो यस्मिन् तत् देवोभिभवविस्तरं दे-
वानां इन्द्रादीनां अभिभवः पराभवः विस्तरः विस्तारः महिषासुरचेष्टितं महिषासुरस्य चेष्टितं चे-
ष्टितं कर्म ॥ ४ ॥ सूर्येन्द्रे ति हे भगवन्तौ सः स्वयं एव सूर्येन्द्राग्न्यनिलेन्दूनां किञ्च यमस्य किञ्च व-
रुणस्य किञ्च अन्येषां अधिकारान् अधितिष्ठति सः महिषासुरः सूर्येन्द्राग्न्यनिलेन्दूनां सूर्यस्य इन्द्रस्य-

अग्निश्च अनिलश्च इन्दुश्च ते सूर्येन्द्राग्न्यनिलेन्दवः तेषां सूर्येन्द्राग्न्यनिलेन्दूनाम् अनिलः वायुः इन्दुः चन्द्रः अन्येषां देवानां अधिकारान् इत्यत्र सप्तम्यर्थे द्वितीया ॥ ५ ॥ स्वर्गादिति हे भगवन्तौ दुरात्मना तेन महिषासुरेण स्वर्गात् निराकृताः सर्वे देवगणाः भुवि विचरन्ति के इव मर्त्याः यथा यथा शब्दो इवार्थे दुष्टः आत्मा यस्य सः दुरात्मा तेन दुरात्मना दुष्टः कुटिलः आत्मा अन्तःकरणं तेन महिषेन महिषासुरेण स्वर्गात् निराकृताः निस्सारिताः सर्वे समस्ताः देवगणाः देवानां इन्द्रादीनां गणाः समूहाः भुवि पृथिव्यां ॥ ६ ॥ * * * * * * *

५ ॥ स्वर्गान्निराकृताःसर्वेतेनदेवगणाभुवि विचरन्तियथामर्त्या महिषेणदुरात्मना ॥ ६ ॥ एतद्वःकथितंसर्वममरारिविचेष्टितं शरणंवःप्रपन्नास्मोवधस्तस्यविचिंत्यतां ॥ ७ ॥ * *

एतद इति हे भगवन्तौ अस्माभिः सर्वं एतत् अमरारिविचेष्टितं वः कथितं वयं वः शरणं प्रपन्नास्मः युवाभ्यां तस्य वधः विचिन्त्यतामित्यर्थः सर्वं समस्तं अमरारिविचेष्टितं अमराणां अरिः अमरारिः अमरारेः विचेष्टितं अमरारिविचेष्टितं अमराणां देवानां अरिः शत्रुः अमरारिः महिषासुरस्य विचेष्टितं कर्म वः युष्माकं प्रपन्नाः आगताः प्राप्ताः स्मः भवामः युवाभ्यां तस्य महिषासुरस्य वधः प्रहारं [illegible] त्यतां विचार्यतामित्यर्थः ॥ ७ ॥ इत्थमिति हे राजन् इत्थं देवानां वचांसि नि-

शम्भू भ्रुकुटीकुटिलाननौ एकः मधुसूदनः किञ्च अपरः शंभुः कोपं चकार इत्थं अनेन प्रकारेण देवानामिन्द्रादीनां वचांसि वाक्यानि निशम्य श्रुत्वा भ्रुकुटीकुटीलाननौ भ्रुवोः कुटी भ्रुकुटी भ्रुकुट्या कुटिले आनने ययोः तौ भ्रुकुटीकुटिलाननौ कुटी कौटिल्यं कुटिले वक्रे आनने मुखे मधुसूदनः विष्णुः अपरः अन्यः शंभुः शिवः कोपं क्रोधं ॥ ८ ॥ तत इति हे राजन् अति कोपपूर्णस्य चक्रिणः ततः वदनात् किञ्च अतिकोपपूर्णस्य ब्रह्मणः ततः वदनात् किञ्च अतिकोपपूर्णस्य शं-

**इत्थंनिशम्यदेवानांवचांसिमधुसूदनः चकारकोपंशंभुश्चभ्रुकुटी कुटिलाननौ ॥८ ॥ ततोतिकोपपूर्णस्यचक्रिणोवदनात्ततः नि श्चक्राममहत्तेजोब्रह्मणःशङ्करस्यच ॥ ९ ॥ अन्येषांचैवदेवानां शक्रादीनांशरीरतः निर्गतंसुमहत्तेजस्तच्चैक्यंसमगच्छत १० ।**

करस्य ततः वदनात् महत् तेजः निश्चक्राम अतिकोपपूर्णस्य अतिकोपेन पूर्णः अतिकोपपूर्णः तस्य अति कोपपूर्णस्य अतिकोपेन अतिक्रोधेन पूर्णः व्याप्तः चक्रिणः चक्रमस्यास्तीति चक्री तस्य चक्रिणः चक्रिणः विष्णोः तस्मादिति ततः वदनान्मुखादित्यर्थः ॥ ९ ॥ * * * * *

अन्येषांचेति हे राजन् किञ्च कुपितानां अन्येषां देवानां किञ्च शक्रादीनां देवानां शरीरतः एव

निर्गतं तत्सुमहत् तेजः ऐक्यं समगच्छत शक्रः आदिर्येषां ते शक्रादयः तेषां शक्रादीनां शक्रः इन्द्रः शरीरतः शरीरादिति शरीरतः पञ्चम्यास्तसिल्प्रत्ययः ऐक्यं एकत्वं समगच्छत प्राप ॥ १० ॥ अतीवेति हे राजन् तत्र ते सुराः ज्वालाव्याप्तदिगन्तरं अतीवतेजसः कूटं ज्वलंतं पर्वतं इव ददृशुः तत्रतस्मिन्काले सुराः देवाः ज्वालाव्याप्तदिगन्तरं दिशां अन्तरं दिगन्तरं ज्वालया व्याप्तं दिगन्तरं येन तत् ज्वालाव्याप्तदिगन्तरं अन्तरं मध्ये अतीति अत्यन्तमेव कूटं समूहं ज्वलन्तं ज्वलतीति ज्वलन् ज्वलंतमित्यर्थः ॥ ११ ॥ अतुलमिति हे राजन् तत्र सर्वदेवशरीरजं अतुलं तत् तेजः एकस्थं सत्

अतीवतेजसःकूटंज्वलन्तमिवपर्वतं ददृशुस्तेसुरास्तत्रज्वालाव्याप्तदिगन्तरं ॥ ११ ॥ अतुलंतत्रतत्तेजःसर्वदेवशरीरजं एकस्थंतदभून्नारीव्याप्तलोकत्रयंत्विषा ॥ १२ ॥ * * *

स्थित्वा व्याप्तलोकत्रयं सत् नारी अभूत् तत्र तस्मिन् काले सर्वदेवशरीरजं सर्वेच ते देवाश्च सर्वदेवाः सर्वदेवानां शरीरं सर्वदेवशरीरं सर्वदेवशरीरात् जातं सर्वदेवशरीरजं सर्वं समस्ताः अतुलं महत् एकस्थं सत् एकाकारेण स्थितं सत् त्विषा कांत्या व्याप्तलोकत्रयं लोकानां त्रयं लोकत्रयं व्याप्तं लोकत्रयं येन तत् व्याप्तलोकत्रयं लोकानां स्वर्गमर्त्यपातालानां त्रयं समूहः नारी स्त्री अभूत् ॥ १२ ॥ तेजो विभागेनांगविभागमाह यदिति हे राजन् शांभवं यत् तेजो अभूत् तेन ते-

देहा...

जसा तन्मु[illegible]ायत किञ्च याम्येन तेजसा केशाः अभवन् किञ्च विष्णुतेजसा बाहवः अभवन् शांभवं शम्भोः इदं शांभवं शम्भोः शिवस्य तन्मुखं तस्या मुखं तन्मुखं तस्याः नार्याः यमस्य इदं याम्यं तेन याम्येन विष्णुतेजसा विष्णोः तेजः विष्णुतेजः तेन विष्णुतेजसा बाहवः अष्टादशभुजाः १३ ॥ सौम्येनेति हे राजन् सौम्येन तेजसा स्तनयोः युग्मं अभवत् किञ्च ऐंद्रेण तेजसा मध्यं अभवत् किञ्च वारुणेन तेजसा जङ्घोरू अभवतां किञ्च भुवः तेजसा नितम्बः अभवत् सौम्येन सोमस्य इदं

यदभूच्छांभवन्तेजस्तेनाजायततन्मुखं याम्येनचाभवन्केशावाहवोविष्णुतेजसा ॥ १३ ॥ सौम्येनस्तनयोर्युग्मं मध्यंचैंद्रेणचाभवत् वारुणेनचजङ्घोरूनितंबस्तेजसाभुवः ॥ १४ ॥ ब्रह्मणस्तेजसापादौतदंगुल्योर्कतेजसा वसूनांचकरांगुल्यःकौवेरेणचनासि

सौम्यं तेन सौम्येन सोमस्य चन्द्रस्य युग्मं इंद्रं ऐन्द्रेण इन्द्रस्य इदं ऐन्द्रं तेन ऐन्द्रेण मध्यं उदरभागः वारुणेन वरुणस्य इदं वारुणं तेन वारुणेन जङ्घोरू जंघे च ऊरू च प्राण्यङ्गत्वादेकवद्भावः जङ्घोरू भुवः पृथिव्याः नितम्बः कटिपश्चाद्भागः ॥ १४ ॥ ब्राह्मणेति हे राजन् ब्रह्मणः तेजसा पादौ अभवतां किञ्च अर्कतेजसा तदंगुल्यः अभवन् किञ्च वसूनां तेजसा करांगुल्यः अभवन् किञ्च

कौवेरेण तेजसा नासिका अभवत् पादौ चरणौ अर्कस्य तेजः अर्कतेजः तेन अर्कतेजसा अर्कस्य सूर्यस्य तदंगुल्यः तयोः अंगुल्यः तदंगुल्यः तयोः पादयोः वसूनां अष्टवसूनां करांगुल्यः कराणां अंगुल्यः करांगुल्यः कराणां हस्तानां कौवेरेण कुवेरस्य इदं कौवेरं तेन कौवेरेण ॥ १५ ॥ तस्या इति हे राजन् प्राजापत्येन तेजसा तस्याः दन्ताः तु संभूताः किञ्च तथा पावकतेजसा नयनत्रितयं जज्ञे प्राजापत्येन प्रजानां पतिः प्रजापतिः प्रजापतेः इदं प्राजापत्यं तेन प्राजापत्येन प्रजानां लोकानां जनानां पतिः स्वामी प्रजापतेः दक्षस्य तस्याः नार्याः सम्भूता जाताः पावकतेजसा

का ॥ १५ ॥ तस्यास्तुदंताःसंभूताःप्राजापत्येनतेजसा नयनत्रितयंजज्ञेतथापावकतेजसा ॥ १६ ॥ भ्रुवौचसंध्ययोस्तेजःश्रवणावनिलस्यच अन्येषांचैवदेवानांसंभवस्तेजसांशिवा ॥ १७ ॥ *

पावकस्य तेजः पावकतेजः तेन पावकतेजसा पावकस्य अग्नेः नयनत्रितयं नयनानां त्रितयं नयनत्रितयं नयनानां नेत्राणां जज्ञे जातं ॥ १६ ॥ * * * * * *

भ्रुवौचेति हे राजन् किञ्च सन्ध्ययोः तेजः भ्रुवौ अभूतां किञ्च अनिलस्य तेजः श्रवणौ अभूतां किञ्च अन्येषां देवानां तेजसां सम्भवः शिवा अभवत् अनिलस्य वायोः श्रवणौ कर्णौ सम्भवः एकीभावः शिवा [illegible]वेति प्रसिद्धौ ॥ १७ ॥ तत इति हे राजन् ततः महिषार्दिताः अमराः सम-

…ः पूर्णे बाणपूर्णे

… निषङ्गौ ॥



स्तदेवानां ते… …सभुद्भवां तां विलोक्य मुदं प्रापुरित्यन्वयः ततः तदनन्तरं शिवाप्रादुर्भावानन्त-रं महिषार्दिताः महिषेण अर्दिताः महिषार्दिताः महिषासुरेण अर्दिताः पीडिताः अमराः देवाः समस्तदेवानां समस्ताश्च ते देवाश्च समस्तदेवाः तेषां समस्तदेवानां समस्ताः सम्पूर्णाः तेजोराशिस-मुद्भवां तेजसां राशिः तेजोराशिः तेजोराशिभिः समुद्भवो यस्याः सा तेजोराशिसमुद्भवा तां तेजो-राशिसमुद्भवां राशिः पमूहः समुद्भवः प्रादुर्भावः तां शिवां देवीं विलोक्य दृष्ट्वा मुदं हर्षं ॥ १८ ॥ शूलमिति हे राजन् पिनाकधृक् शूलात् शूलं विनिष्कृष्य तस्यै ददौ किञ्च कृष्णः स्वचक्रतः चक्रं

ततःसमस्तदेवानांतेजोराशिसमुद्भवां तांविलोक्यमुदंप्रापुरमरा महिषार्दिताः ॥ १८ ॥ शूलंशूलाद्विनिष्कृष्यददौतस्यैपिनाकधृक् चक्रंचदत्तवान्कृष्णःसमुत्पाद्यस्वचक्रतः ॥ १९ ॥ * *

समुत्पाद्य तस्यै दत्तवानित्यन्वयः पिनाकं धत्ते इति पिनाकधृक् पिनाको धनुः धत्ते धार्यते पिना-कधृक् शिवः शूलात् त्रिशूलात् शूलं त्रिशूलं विनिष्कृष्य आकृष्य तस्यै देव्यै कृष्णः विष्णुः स्वचक्रतः स्वस्य चक्रं स्वचक्रं स्वचक्रादिति स्वचक्रतः स्वस्य स्वकीयस्य समुत्पाद्य जनीयत्वेत्यर्थः ॥ १९ ॥ *

शङ्खञ्चेति हे राजन् किञ्च वरुणः शङ्खं तस्यै ददौ हुताशनः शक्तिं ददौ मारुतः चापं तथा बाण-पूर्णे इषुधी दत्तवान् तस्यै देव्यै हुताशनः अग्निः तस्यै देव्यै मारुतो वायुः चापं धनुः बाणपूर्णे

बाणैः पूर्णे बाणपूर्णे इषुधी इषवो धीयन्ते ययोः तौ इषुधी इषवः बाणाः धीयन्ते स्थाप्यन्ते इषुधी निषङ्गौ ॥ २० ॥ वज्रमिति देयभेदादेकस्यैव दातुः पुनरुपादानेपि न दोषः हे राजन् अमराधिपः इन्द्रः कुलिशात् वज्रं समुत्पाद्य तस्मै ददौ किञ्च सहस्राक्षः ऐरावतात् गजात् घण्टां समुत्पाद्य तस्मै ददौ अमराधिपः न म्रियंते इति अमराः अमराणां अधिपः अमराधिपः अमराणां देवानां अधिपः स्वामी कुलिशात् वज्रात् वज्रं समुत्पाद्यजनयित्वेत्यर्थः सहस्राक्षः सहस्राणि अ-

शङ्खवरुणःशक्तिंदौतस्मै हुताशनः मारुतोदत्तवांश्चापंबा-
णपूर्णौतथेषुधी ॥ २० ॥ वज्रमिन्द्रःसमुत्पाद्यकुलिशादमराधि-
पः ददौतस्मै सहस्राक्षोघण्टामैरावताद्गजात् ॥ २१ ॥ कालद
ण्डाद्यमोदण्डंपाशञ्चांबुपतिर्द्ददौ प्रजापतिश्चाक्षमालांददौब्र

क्षीणि यस्य सः सहस्राक्षः अक्षीणि नेत्राणि सहस्राक्षः इन्द्रः ॥ २१ ॥ कालेति हे राजन् यमः कालदण्डात् दण्डं समुत्पाद्य तस्मै ददौ किञ्च अंबुपतिः पाशं तस्मै ददौ किञ्च प्रजापतिः ब्रह्मा अक्षमालां किञ्च कमण्डलुं तस्मै ददौ यमः कालः दण्डं कालदण्डं समुत्पाद्य जनयित्वेत्यर्थः अंबु- पतिः अंबुनां पतिः अंबुपतिः अंबुनां जलानां पतिः स्वामी तस्मै देव्यै प्रजापतिः प्रजानां पतिः

[illegible]धः कर्ता

[illegible]

प्रजापतिः प्रजानां लोकानां जनानां पतिः स्वामी अक्षमालां अक्षैः निर्मितां माला अक्षमाला तां अक्षमालाम् अक्षैः रुद्राक्षैः निर्मिता रचिता तस्यै देव्यै ॥ २२ ॥ * * * *
समस्तेति हे राजन् दिवाकरः समस्तरोमकूपेषु निजरश्मीं तस्यै ददौ किञ्च कालः खड्गं किञ्च निर्मलं चर्म तस्याः दत्तवान् दिवाकरः सूर्यः समस्तरोमकूपेषु रोम्णां कूपाः रोमकूपाः समस्ताश्च ते रोमकूपाश्च समस्तरोमकूपाः तेषु समस्तरोमकूपेषु समस्ताः संपूर्णाः निजरश्मीन् निजाश्च ते रश्मयश्च निजरश्मयः तान् निजरश्मीन् निजाः स्वकीयाः रश्मयः किरणाः कालः निमेषाद्यभिमानि-

ह्याक्षमण्डलुं ॥ २२ ॥ समस्तरोमकूपेषुनिजरश्मीन्दिवाकरः
कालश्चदत्तवान्खड्गन्तस्याश्चर्मचनिर्मलं ॥ २३ ॥ क्षीरोदश्चाम
लंहारमजरेचतथांवरेचूडामणिंतथादिव्यंकुण्डलेकटकानिच

नीदेवता निर्मलं स्वच्छं रत्नजडितं तस्याः देव्यैः तस्या इतिसम्बन्धितेन विवक्षायां षष्ठी २३ क्षीरोद- श्चेति अंगुलीयकरत्नदानांतं क्षीरोदः कर्ता हे राजन् क्षीरोदः तस्यै क्षीरोदः समुद्र अमलं शुभ्रं हारं मुक्ताहारं अजरे नवीने अम्बरे वस्त्रे तथा च तथैव दिव्य रमणीयं चूडामणिं शिरोभूषणं कुण्डले कर्णभूषणे कटकानि करभूषणानि ॥ २४ ॥ अर्द्धचन्द्रमिति तथा शुभ्रं अर्द्धचन्द्रं ददौ सर्व- बाहुषु केयूरान् ददौ किञ्च विमलौ नूपुरौ ददौ तद्वत् अनुत्तमं ग्रैवेयकं ददौ शुभ्रं स्वच्छं निर्मलं

अर्द्धचन्द्रं अर्द्धश्चासौ चन्द्रश्च अर्द्धचन्द्रः तं अर्द्धचन्द्रं सर्ववाहुषु सर्वाश्च ते वाहवश्च सर्ववाहवः तेषु सर्ववाहुषु सर्वे संपूर्णा वाहवः अष्टादशभुजाः केयूरान् अङ्गदानि वाहुभूषणानि विमलौ स्वच्छौ नूपुरौ पादभूषणौ नूपुरौजात्याभिप्रायेण द्विवचनांतं तद्वत्तथैव अनुत्तमं श्रेष्ठं ग्रैवेयकं ग्रीवायां भवं ग्रैवेयकं ग्रीवाभूषणं ॥ २५ ॥ * * * * * * *

अंगुलीयकरत्नानीति किञ्च समस्तासु अंगुलीषु अंगुलीयकरत्नानि समस्तासु संपूर्णासु अंगुलीयकर-त्नानि अंगुलीषु भवानि अंगुलीयकानि अंगुलीयकानि च तानि रत्नानि च अंगुलीयकरत्नानि तानि

॥ २४ ॥ अर्द्धचन्द्रंतथाशुभ्रं केयूरान्सर्ववाहुषु नूपुरौविमलौत द्वद्ग्रैवेयकमनुत्तमं ॥ २५ ॥ अंगुलीयकरत्नानिसमस्तास्वंगु लीषुच विश्वकर्माददौतस्यै परशुंचाति निर्मलं ॥ २६ ॥

अंगुलीयकरत्नानि कवचदानांतं विश्वकर्माणः कर्त्तृत्वं हे राजन् विश्वकर्मा तस्यै अतिनिर्मलं परशुं ददौ तस्यै देव्यै अतिनिर्मलं अतिस्वच्छं ॥ २६ ॥ अस्त्राणि तथा अनेकरूपाणि ददौ अस्त्राणि ददौ किञ्च अभेद्यं दंशनं ददौ अनेकं रूपं येषां तानि अनेकरूपाणि रूपं स्वरूपं अस्त्राणि पाशुपतास्त्रादीनि अभेद्यं भेदितुं योग्यं भेद्यं न भेद्यं अभेद्यं दंशनं कवचं अम्लानेत्यारभ्यपंकजदानांतं जलधिः कर्त्ता हे राजन् जलधिः तस्यै अम्लानपंकजां मालां शिरसि अददत् अपरां मालां उरसि

अददत् जलधिः समुद्रः तस्यै देव्यै अम्लानपङ्कजाम् अम्लानानि पङ्कजानि यस्यां सा अम्लानपङ्क-जा ताम् अम्लानपङ्कजाम् पङ्कजानि कमलानि शिरसि मस्तके अपरां अन्यां मालां उरसि वक्षस्थले २७ ॥ अददादिति किञ्च अतिशोभनं पङ्कजं अददादित्यन्वयः अतिशोभनं अतिमनोहरं पङ्कजं-कमलमित्यर्थः पूर्वसंबंधः रत्नसिंहयोर्दाने हिमवान् कर्त्ता हे राजन् हिमवान् तस्यै सिंहवाहनं किञ्च विविधानि रत्नानि ददौ हिमवान् हिमाचलः तस्यै देव्यै विविधानि अनेकानि ॥ २८ ॥ * *

अस्त्राण्यनेकरूपाणितथाभेद्यंचदंशनं अम्लानपङ्कजांमालांशि रस्युरसिचापरां ॥ २७ ॥ अददज्जलधिस्तस्यैपङ्कजंचातिशो भनं हिमवान्वाहनंसिंहंरत्नानिविविधानिच ॥ २८ ॥ ददाव शून्यंसुरयापानपात्रंधनाधिपः शेषश्चसर्वनागेशोमहामणिविभू

ददाविति हे राजन् धनाधिपः तस्यै सुरया अशून्यं पानपात्रं ददौ किञ्च सर्वनागेशः सः शेषः महा-मणिविभूषितं नागहारं ददौ सः कः यः इमां पृथिवीं धत्ते सार्द्धश्लोकेनान्वयः धनाधिपः धनानां अधिपः धनाधिपः धनानां द्रव्याणां अधिपः स्वामीधनाधिपः कुबेरः तस्यै देव्यै सुरया मदिरया अशून्यं न शून्यं अशून्यं शून्यरहितं अशून्यं पूर्णं पानपात्रं पानस्य पात्रं पानपात्रं तत् पानपात्रं

पानस्य मधुपानस्य सर्वनागेशः सर्वे च ते नागाश्च सर्वनागाः सर्वनागानां ईशः सर्वनागेशः सर्वे-
संपूर्णाः नागाः सर्पा ईशः स्वामी सः शेषः तस्यै देव्यै महांतश्च ते मणयश्च महामणयः महामणि-
भिः विभूषितः महामणिविभूषितः तं महामणिविभूषितं महांतः श्रेष्ठाः विभूषितं शोभायमानं
नागहारं नागैर्निर्मितहारः नागहारः तं नागहारं नागैः सर्पैः निर्मितः रचितः सः शेषः धत्ते धा-
रयतीत्यर्थः ॥ २८ ॥ अन्यैरिति अन्यैः अपि सुरैः भूषणैः तथा आयुधैः सम्मानिता देवी उच्चैः सा-
ट्टहासं यथा स्यात्तथा मुहुर्मुहुः ननाद सुरैः देवैः भूषणैः आभरणैः आयुधैः शस्त्रास्त्रैः सम्मानिता-

**षितं ॥ २९ ॥ नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमां अन्यैरपि**
**सुरैर्देवी भूषणैरायुधैस्तथा ॥ ३० ॥ सम्मानिता ननादोच्चैः साट्ट**
**हासं मुहुर्मुहुः तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥ ३१ ॥**

सत्कृता उच्चैः उच्चस्वरेण साट्टहासं अट्टहासेन अत्यर्थहासेन वर्त्तमानं युक्तं मुहुर्मुहुः वारंवारमित्य-
र्थः ननाद शब्दंकृतवती सार्द्धश्लोकार्थः ॥ ३० ॥ तस्यारिति हे राजन् तस्या घोरेण नादेन कृत्स्नं
नभः आपूरितं तस्याः घोरेण भयंकरेण नादेन शब्देन कृत्स्नं समस्तं नभः आकाशं आपूरितं व्या-
प्तं अर्द्धश्लोकार्थः ॥ ३१ ॥ * * * * * * * *

अमायेति हे राजन् अमायता अतिमहता तेन महान् प्रतिशब्दः बभूत किञ्च सकलाः लोकाः

क्षुक्षुभुः किञ्च समुद्राः चकम्पिरे अमायता मयतीति मयन् न मयन् अमयन् तेन अमायता अप-रिमितेन तेन नादेन अतिशब्दः प्रतिध्वनिः सकलाः सम्पूर्णाः लोका जनाः क्षुक्षुभुः क्षुभितवन्तः चकम्पिरे कम्पिते ॥ ३२ ॥ चचालेति हे राजन् वसुधा चचाल किञ्च सकलाः महीधराः चेलुः किञ्च देवाः सिंहवाहिनीं तां मुदा जय इति ऊचुरित्यन्वयः वसुधा पृथिवी चचाल चलिता बभूव सकलाः सम्पूर्णाः महीधराः धरन्तीति धराः मह्याधराः महीधराः धरन्ति धारयन्ति मह्याः पृ-

अमायतातिमहताप्रतिशब्दोमहानभूत् क्षुक्षुभुःसकलालोकाः समुद्राश्चचकंपिरे ॥ ३२ ॥ चचालवसुधाचेलुःसकलाश्चमहीध-राः जयेतिदेवाश्चमुदातामूचुःसिंहवाहिनीं ॥ ३३ ॥ तुष्टुवुर्मु-नयश्चैनांभक्तिनम्रात्ममूर्त्तयः दृष्ट्वासकस्तंसंक्षुब्धंत्रैलोक्यमम-

थिव्याः महीधराः पर्वताः चेलुः चलिताः बभूवुः देवाः इन्द्रादयः सिंहवाहिनीं सिंहं वाहितुं शीलं यस्याः सा सिंहवाहिनी ताम् सिंहवाहिनीम् वाहितुं प्राप्तुं शीलं स्वभावः तां देवीं मुदा हर्षेण प्रीत्या जयजय इति ऊचुः कथितवन्तरित्यर्थः ॥ ३३ ॥ तुष्टुवुरिति हे राजन् भक्तिनम्रात्ममूर्तयः मुनयः एनां तुष्टुवुः किञ्च अमरारयः समस्तं त्रैलोक्यं संक्षुब्धं दृष्ट्वा भक्तिनम्रात्ममूर्तयः आत्मा च

मूर्त्तिश्च आत्ममूर्त्ती भक्त्या नम्रे आत्ममूर्त्तिः येषां ते भक्तिनम्रात्ममूर्त्तयः आत्मा अन्तःकरणं मूर्तिं शरीरं नम्रेन नम्रीभूतेन एनां देवीं तुष्टुवुः स्तुतवन्तः अमरारयः अमराणां अरयः अमरारयः अमराणां देवानां अरयः शत्रवः अमरारयः दैत्याः समस्तं सम्पूर्णं त्रैलोक्यं त्रयो लोकाः त्रैलोक्यं संक्षुब्धं क्षुभितं व्याकुलं ॥ ३४ ॥ * * * *

सन्नद्धेति हे राजन् सन्नद्धाखिलसैन्याः ते उद्यायुधाः सन्तः समुत्तस्थुः आः एतत् किं इति क्रोधात् आभाष्य महिषासुरः अशेषैः असुरैः वृतः सन्तः शब्दं अभ्यधावत् ततः सः त्विषा व्याप्तलो-

**रारयः ॥ ३४ ॥ सन्नद्धाखिलसैन्यास्तेसमुत्तस्थुरुद्यायुधाः आः**
**किमेतदितिक्रोधादाभाष्यमहिषासुरः ॥ ३५ ॥ अभ्यधावततं**
**शब्दमशेषैरसुरैर्वृतः सददर्शततोदेवींव्याप्तलोकत्रयांत्विषा ॥**

कत्रयां तां देवीं ददर्श अखिलानि च तानि सैन्यानि च अखिलसैन्यानि सन्नद्धानि अखिलसैन्यानि येषां ते सन्नद्धाऽखिलसैन्याः अखिलानि समस्तानि सन्नद्धानि धृतसन्नद्धानि उद्यायुधाःसन्तः समुत्तस्थुः धावन्तः आः इति क्रोधाविष्करणेन किं किमस्ति आभाष्य उक्त्वा अशेषैः सम्पूर्णैः असुरैः दैत्यैः वृतः सन् वेष्टितः सन् तं शब्दं अभिलक्षीकृत्य अभ्यधावत् ततः तदनन्तरं धावनानन्तरं सः महिषासुरः त्विषा कान्त्या व्याप्तलोकत्रयां लोकानां त्रयं लोकत्रयं व्याप्तं लोकत्रयं यया सा

व्याप्तलोकत्रया ताम् व्याप्तलोकत्रयाम् लोकानां स्वर्गमर्त्यपातालानां त्रयं समूहः ॥ ३५ ॥ देवीं विशेषयति सार्द्धपादेति कथंभूतां देवीं पादाक्रान्त्यानतभुवम् पादाभ्यां आक्रांतिःपादाक्रान्तिः तया पादाक्रान्त्या आनताभू यया सा पादाक्रान्त्यानतभूः ताम् पादाक्रान्त्यानतभुवम् पादाभ्यां चरणाभ्यां आक्रान्तिः आक्रमणं आनता नम्रीकृता भूः पृथिवी पुनः कथं भूतां देवीं किरीटोल्लिखितांवराम् किरीटेन उल्लितं अम्बरं यया सा किरीटोल्लिखितांवरा ताम् किरीटोल्लिखितांवराम् किरीटेन मुकुटेन उल्लिखितं स्पृष्टं अम्बरं आकाशं पुनः कथं भूतां देवीं धनुर्ज्यानिस्वनेन क्षोभिताऽशेषपाता-

**३६ ॥ पादाक्रांत्यानतभुवंकिरीटोल्लिखितांवरां क्षोभिताशेषपा तालांधनुर्ज्यानिःस्वनेनतां ॥ ३७ ॥ दिशोभुजसहस्रेणसमन्ता द्व्याप्यसंस्थितां ततःप्रववृतेयुद्धं तयादेव्यासुरद्विषां ॥ ३८ ॥**

लाम् धनुषः ज्या धनुर्ज्या धनुर्ज्यायाः निःस्वनः धनुर्ज्यानिःस्वनः तेन धनुर्ज्यानिःस्वनेन ज्या प्रत्यञ्चा निःस्वनः टङ्कारशब्दः अशेषाणि च तानि पातालानि च अशेषपातालानि क्षोभितानि अशेषपातालानि क्षुभितानि ॥ ३७ ॥ * * *

दिशइति पुनः कथं भूतां देवीं भुजसहस्रेण दिशः समन्ताद्व्याप्य संस्थिताम् भुजसहस्रेण भुजानां सहस्रं भुजसहस्रं तेन भुजसहस्रेण समन्तात्सर्वतः हे राजन् ततः वहुधा मुक्तैः शस्त्रास्त्रैः आदी-

पितदिगन्तरं सुरद्विषां तया देव्या सह युद्धं प्रवृत्ते ततः तदनन्तरं देवीदर्शनानन्तरं बहुधा अने-
कप्रकारेण मुक्तैः क्षिप्तैः शस्त्रास्त्रैः शस्त्राणि च अस्त्राणि च तानि शस्त्रास्त्राणि तैः शस्त्रास्त्रैः शस्त्रा-
णि बाणाः अस्त्राणि पाशुपतास्त्रादीनि आदीपितदिगन्तरं दिशां अन्तरं दिगन्तरं आदीपितं दिग-
न्तरं यस्मिन् तत् आदीपितदिगन्तरं अन्तरं मध्य आदीपितं प्रकाशितं सुरद्विषां दैत्यानां प्रवृत्ते प्र-
वृत्तं समहिषासुरसेनानीः महासुरः चिक्षुराख्यः किञ्च अन्यैः सहितः चामरः चतुरङ्गबलान्वितः

शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगन्तरं महिषासुरसेनानीश्चि
क्षुराख्योमहासुरः ॥ ३९ ॥ युयुधेचामरश्चान्यैश्चतुरङ्गबलान्वि
तः रथानामयुतैःषड्भिरुदग्राख्योमहासुरः ॥ ४० ॥ अयुध्यता
युतानांचसहस्रेणमहाहनुः पञ्चाशद्भिश्चनियुतैरसिलोमामहा

सन् तया सह युयुधे महिषासुरस्य सेनानीः महासुरः चत्वारि अङ्गानि यस्य तत् चतुरङ्गं चतुर-
ङ्गं च तत् बलं च चतुरङ्गबलं चतुरङ्गबलेन अन्वितः चतुरङ्गबलान्वितः अङ्गानि रथनागहयपदात-
यः बलं सैन्यं तया देव्या ॥ ४० ॥ अयुध्यतेति हे राजन् उदग्राख्यः महासुरः षड्भिः रथानां अयुतैः
तया सह अयुध्यत किञ्च महाहनुः अयुतानां रथानां सहस्रेण तया सह अयुध्यत उदग्राख्यः उद-

यनामा महासुरः महादैत्यः तया देव्या महाहनुः महाहनुनामादैत्यः ॥ ४१ ॥

किञ्च असिलोमा महासुरः पञ्चाशद्भिः रथानां नियुतैः षड्भिः अयुतानां रथानां शतैः तया सह रणे युयुधे असिलोमा असिलोमनामा महासुरः महादैत्यः तया देव्या रणे संग्रामे एकंदशशतंचैवसहस्रमयुतंतथा लक्षंचनियुतंचैवकोटिरर्बुदमेवच वृन्दंखर्वोनिखर्वश्चसङ्कम्पद्मौचसागरं महापद्मंपरार्द्धंचदशावृत्यायथाक्रममिति ब्रह्माण्डपुराणे ॥ ४२ ॥ अनेकैः गजवाजिसहस्रौघैः परिवारि-

सुरः ॥ ४१ ॥ अयुतानांशतैःषड्भिर्बाष्कलोयुयुधेरणे गजवाजिसहस्रौघैरनेकैःपरिवारितः ॥ ४२ ॥ वृतोरथानांकोट्याचयुद्धे तस्मिन्नयुध्यत विडालाख्योयुतानांचपञ्चाशद्भिरथायुतैः ॥ ४३ ॥ युयुधेसंयुगेतत्ररथानांपरिवारितः अन्येचतत्रायुतशोरथनाग

तः किञ्च रथानां कोट्या वृतः बाष्कलः तया सह तस्मिन् युद्ध अयुध्यत अनेकैः असंख्यातैः गजवाजिसहस्रौघैः गजाश्च वाजिनश्च ते गजवाजिनः गजवाजिनां सहस्राणि गजवाजिसहस्राणि गजवाजिसहस्राणां ओघाः गजवाजिसहस्रौघाः तैः गजवाजिसहस्रौघैः गजाः हस्तिनः वाजिनः अश्वाः ओघाः समूहाः परिवारितः वेष्टितः वृतः वेष्टितः बाष्कलनामादैत्यः तया देव्या ॥ ४३ ॥

अथ अयुतानाख्यानां पञ्चाशद्भिः अयुतैः परिवारितः विडालाख्यः विडालनामादैत्यः तया देव्या तत्र तस्मिन् संयुगे तस्मिन् संग्रामे ॥ ४४ ॥ युयुधुरिति रथनागाहयैर्वृताः अयुतशः अन्ये महासुराः देव्या सह तत्र संयुगे युयुधुः अस्य पूर्वेणान्वयः रथाश्च नागाश्च हयाश्च रथनागहयाः तैः रथनागाहयैः नागाः हस्तिनः हयाः अश्वाः वृताः परिवेष्टिताः संयुगे तस्मिन् संग्रामे ॥ ४५ ॥ *
रथानांचेति उत्तरार्द्धमुत्तरान्वयि हे राजन् रथानां तथा दन्तिनां किञ्च हयानां कोटिसहस्रैः वृ-

**हयैर्वृताः ॥ ४४ ॥ युयुधुःसंयुगेदेव्यासहतत्रमहासुराः कोटिकोटिसहस्रैस्तुरथानांदन्तिनांतथा ॥ ४५ ॥ हयानांचवृतोयुद्धेतत्राभून्महिषासुरः तोमरैर्भिन्दिपालैश्चशक्तिभिर्मुसलैस्तथा ॥ ४६ ॥ युयुधुःसंयुगेदेव्याखड्गैःपरशुपट्टिशैः केचिच्चचिक्षि**

तः महिषासुरः तु तत्र युद्धे अभूत् दन्तिनां हयानां अश्वानां कोटिसहस्रैः कोटीनां कोटयः कोटिकोटयः कोटिकोटीनां सहस्राणि कोटिकोटिसहस्राणि तैः कोटिकोटिसहस्रैः वृतः वेष्टितः रचितः अभूत् स्थितो बभूव ॥ ४६ ॥ युयुधुरिति उत्तरार्द्धमुत्तरान्वयि हे राजन् केचित् दैत्याः तोमरैः भिन्दिपालैः किञ्च शक्तिभिः तथा मुसलैः खड्गैः परशुपट्टिशैः देव्या सह तत्र संयुगे युयुधुः

तोमरैः शर्वा[illegible] भिन्दिपालैः हस्तप्रमाणकांडैः शक्तिभिः सर्वजनप्रसिद्धिभिः परशुपट्टिशैः परशवश्च पट्टिशाश्च ते परशुपट्टिशोः तैः परशुपट्टिशैः परशुः कुठारः पट्टिशः खड्गविशेषः तत्र संयुगे तस्मिन् संग्रामे केचित् दैत्याः शक्तीः चिक्षिपुः तथा केचित् पाशान् चिक्षिपुः ॥ ४७ ॥ देवीमिति हे राजन् अपरे ते तु खड्गप्रहारैः तां देवीं हंतुं प्रचक्रमुः अपरे ते प्रसिद्धादैत्याः खड्गैः प्रहाराः खड्गप्रहाराः तैः खड्गप्रहारैः हंतुं प्रहर्तुं प्रचक्रमुः उद्यमं कृतवन्तः ततः सा चण्डिका देवी अपि ता-

पुःशक्तीःकेचित्पाशांस्तथापरे ॥ ४७ ॥ देवीखड्गप्रहारैस्तुते तांहंतुंप्रचक्रमुः सापिदेवीततस्तानिशस्त्राण्यस्त्राणिचण्डिका ॥ ४८ ॥ लीलयैवप्रचिच्छेदनिजशस्त्रास्त्रवर्षिणी अनायस्ताननादेवीस्तूयमानासुरर्षिभिः ॥ ४९ ॥ * * * *

नि शस्त्राण्यस्त्राणि लीलया एव प्रचिच्छेद ततः तदनन्तरं शस्त्राणि हस्तक्षेप्यानि अस्त्राणि मन्त्रक्षेप्याणि तानि शस्त्राण्यस्त्राणि लीलया एव क्रीडया एव ॥ ४८ ॥ * * * *

उत्तरार्द्धमुत्तरान्वयि लीलया एवेति हे राजन् कथं भूता देवी निजशस्त्रास्त्रवर्षिणी शस्त्राणि च अस्त्राणि च तानि शस्त्रास्त्राणि निजानि च तानि शस्त्रास्त्राणि निजशस्त्रास्त्राणि वर्षितुं शीलं

यस्याः सा निजशस्त्रास्त्रवर्षिणी निजानि स्वकीयानि शीलं स्वभावः पुनः कथं भूता देवी अना-
यस्तानना अनायस्तं आननं यस्याः सा अनायस्तानना अनायस्तं प्रयासरहितं श्रमरहितं आननं
मुखं पुनः कथं तभूा देवी दीव्यते इति देवी पुनः कथं भूता देवी सुरर्षिभिः स्तूयमाना सुरर्षिभि-
र्नारदादिभिः स्तूयमाना स्तूयते इति स्तूयमाना ॥ ४९ ॥ मुमोचेति उत्तरार्द्धमुत्तरान्वयि हे रा-
जन् किञ्च ईश्वरी असुरदेहेषु शस्त्राण्यस्त्राणि मुमोच ईश्वरी असुरदे[illegible] असुराणां देहाः असुर-
देहाः तेषु असुरदेहेषु असुराणां दैत्यानां शस्त्राणि च अस्त्राणि च तानि शस्त्राण्यस्त्राणि क्रुद्धः सः

## मुमोचासुरदेहेषुशस्त्राण्यस्त्राणिचेश्वरी सोपिक्रुद्धोधुतसटोदे
## व्यावाहनकेसरी ॥ ५० ॥ चचारासुरसैन्येषुवनेष्विवहुताशनः
## निश्वासान्मुमुचेयांश्चयुध्यमानारणेऽम्बिका ॥ ५१ ॥ * *

देव्याः वाहनकेसरी अपि धुतसटः सन् असुरसैन्येषु चचार क्रुद्धः जातं क्रोधः वाहनकेसरी वाह-
नभूतोऽसौ केसरी च वाहनकेसरी केसरी सिंहः धुतसटः धुताः सटाः येन सः धुतसटः धुताः क-
म्पिताः सटाः ग्रीवाकेशाः केषु क इव वनेषु हुताशनः इव हुताशनः दावानलः ॥ ५० ॥ चचा-
रेति उत्तरार्द्धमुत्तरान्वयि हे राजन् रणे युद्धमाना अम्बिका यान् निश्वासान्मुमुचे रणे संग्रामे
युध्यमाना युध्यते इति युध्यमाना अम्बिका देवी यान् यावन्तः ॥ ५१ ॥ * * *

तएवेति हे राजन् ते एव सद्यः शतसहस्रशः गणा संभूताः ते निश्वासात्सद्यः तत् क्षणं संभूताः जाताः ते परशुभिः भिन्दिपालासिपट्टिशैः युयुधुः ते गणाः भिन्दिपालासिपट्टिशैः भिन्दिपालाश्च असयश्च पट्टिशाश्च ते भिन्दिपालासिपट्टिशाः तैः भिन्दिपालासिपट्टिशैः असयः खड्गाः पट्टिशाः खड्गविशेषाः ॥ ५२ ॥ नाशयन्त इति हे राजन् कथं भूता ते असुरगणान्नाशयंतः असुराणां गणाः असुरगणाः तान् असुरगणान् असुराणां दैत्यानां गणाः समूहाः नाशयन्त नाशयन्तीति नाशयन्तः पुनः कथंभूता ते देवीशक्त्युपबृंहिताः देव्याः शक्तिः देवीशक्तिः देवीशक्त्या उपबृंहिताः देवीशक्त्युप-

**तएवसद्यःसंभूतागणाःशतसहस्रशः युयुधुस्तेपरशुभिर्भिन्दि**
**पालासिपट्टिशैः ॥ ५२ ॥ नाशयन्तोसुरगणान्देवीशक्त्युपबृं-**
**हिताः अवादयन्तःपटहान्गणाःशङ्खांस्तथापरे ॥ ५३ ॥** *

बृंहिताः शक्तिः प्रभावः उपबृंहिताः आप्यायिताः वर्द्धिताः अस्मिन् युद्धमहोत्सवे केचित् गणाः पटहान् आवादयंतः युद्ध एव महोत्सवः युद्धमहोत्सवः तस्मिन् युद्धमहोत्सवे पटहान् आनकान् आवादयंत अवादीतवन्त इत्यर्थः तथा अपरे गणाः शङ्खान् अवादयन्त अपरे अन्ये अवादयन्त अवादितवन्त इत्यर्थः ॥ ५३ ॥ मृदङ्गांश्चेति तथैव अन्येच मृदङ्गान् अवादयन्त हे राजन् ततः देवी त्रिशूलेन गदया शक्तिवृष्टिभिः किञ्च खड्गादिभिः शतशः महासुरान् निजघान ततः तदनन्तरं

युद्धमहोत्सवप्राप्त्यनंतरं देवी अम्बिका शक्तिवृष्टिभिः शक्तीनां वृष्टयः शक्तिवृष्टयः ताभिः शक्तिवृष्टि-
भिः वृष्टयः वर्षाणि महासुरान् महादैत्यान् किञ्च घण्टास्वनविमोहितान् अन्यान् एव असुरान्
पातयामास घण्टायाः स्वनः घण्टास्वनः घण्टास्वनेन विमोहिताः घण्टास्वनविमोहिताः तान् घं-
टास्वनविमोहितान् स्वनः शब्दः विमोहिताः मूर्छिताः ॥ ५५ ॥ * * * *

मृदङ्गांश्च तथैवान्ये तस्मिन्युद्धमहोत्सवे ततो देवी त्रिशूलेन गदया
शक्तिवृष्टिभिः ॥ ५४ ॥ खड्गादिभिश्च शतशो निजघान महासुरा
न् पातयामास चैवान्यान् घण्टास्वनविमोहितान् ॥ ५५ ॥ असु
रान्भुवि पाशेन वध्वा चान्यानकर्षयत् केचिद्द्विधा कृतास्तीक्ष्णैः
खड्गपातैस्तथापरे ॥ ५६ ॥ विपोथिता निपातेन गदया भुवि शेर

असुरानिति किञ्च अन्यान् असुरान् पाशेन वध्वा भुवि अकर्षयत् भुवि पृथिव्यां केचित् दैत्याः
तीक्ष्णैः खड्गपातैः द्विधाकृताः तीक्ष्णैः तीक्ष्णधारैः खड्गैः पाताः खड्गपाताः तैः खड्गपातैः पाता
प्रहाराः पतनानि द्विधा द्विभागीकृताः ॥ ५६ ॥ विपोथिता इति हे राजन् अपरे गदया विपोथि-
ताः सन्तः निपातेन भुवि शेरते अपरे अन्ये दैत्याः विपोथिताः आमर्दिताः ताडिताः निपातेन भुवि

देवी [illegible]

पृथिव्यां वर्त्तमानसामीप्ये वर्तमानवद्वा इत्यनेन सूत्रेण भूते लट् केचित् दैत्या मुसलेन भृशं हताः संतः रुधिरं वेमुः भृशं अत्यंतं हताः ताडिताः ॥ ५७ ॥ केचिदिति हे राजन् केचित् दैत्याः शूलेन वक्षसि भिन्नाः सन्तः भूमौ निपातिताः शूलेन त्रिशूलेन वक्षसि वक्षस्थले भिन्नाः ताडिताः भूमौ पृथिव्यां निपातिताः निपेतुरित्यर्थः केचित् दैत्याः रणाजिरे शरौघेण निरन्तराः कृताः रणाजिरे रणांगणे शराणां ओघः शरौघः तेन शरौघेण शराणां बाणानां ओघः समूहः निरन्तराः अंगुलिमात्रावका-

ते वेमुश्चकेचिद्रुधिरंमुशलेनभृशंहताः ॥ ५७ ॥ केचिन्निपतिताभूमौभिन्नाःशूलेनवक्षसि निरन्तराःशरौघेणकृताःकेचिद्रणाजिरे ॥ ५८ ॥ सेनानुकारिणःप्राणान्मुमुचुस्त्रिदशार्द्दनाः केषांचिद्बाहवःछिन्नाश्छिन्नग्रीवास्तथापरे ॥ ५९ ॥ * *

शरहिताः कृता इत्यर्थः ॥ ५८ ॥ सेनेति हे राजन् त्रिदशार्दनाः सेनानुकारिणः सन्तः प्राणान्मुमुचुः त्रिदशार्दनाः दैत्याः सेनानुकारिणः केषांचित् बाहवः छिन्नाः सन्तः प्राणान्मुमुचुः केषांचित् दैत्यानां तथा अपरे छिन्नग्रीवाः सन्तः प्राणान्मुमुचुः अपरे अन्ये दैत्याः छिन्नाः ग्रीवाः येषां ते छिन्नग्रीवाः ॥ ५९ ॥ * * * * * * *

शिरांसीति हे राजन् अन्येषां छिन्नानि शिरांसि भूमौ पेतुः अन्येषां दैत्यानां शिरांसि मस्तकानि भूमौ पृथिव्यां अन्ये मध्ये विदारिताः सन्तः भूमौ पेतुः अन्ये दैत्याः मध्ये शरीरमध्यभागे विदारिताः सन्तः ताडिताः सन्तः खंडखंडीकृताः सन्तः भूमौ पृथिव्यां अपरे महासुराः तु विच्छिन्नजङ्घाः सन्तः उर्व्यां पेतुः अपरे महासुराः दैत्याः विच्छिन्नाः जङ्घा येषां ते विच्छिन्नजङ्घा उर्व्यां पृथिव्याम् ॥ ६० ॥ एकेति हे राजन् देव्या केचित् एकबाह्वक्षिचरणाः कृताः केचित् दैत्या बाहू च अक्षिणी च चरणौ

शिरांसिपेतुरन्येषामन्येमध्येविदारिताः विच्छिन्नजङ्घास्त्वपरे-
पेतुरुर्व्यांमहासुराः ॥ ६० ॥ एकबाह्वक्षिचरणाःकेचिद्देव्याद्वि-
धाकृताः छिन्नेपिचान्येशिरसिपतिताःपुनरुत्थिताः ॥ ६१ ॥
कबन्धायुयुधुर्देव्यागृहीतपरमायुधाः ननृतुश्चापरेतत्रयुद्धे तूर्य-

च प्राप्यङ्गत्वादेकवद्भावः बाह्वक्षिचरणं एकं बाह्वक्षिचरणं येषां ते एकबाह्वक्षिचरणाः अक्षिणी नेत्रे चरणौ पादौ देव्या केचित् द्विधाकृताः केचित् दैत्याः द्विधा द्विभागौ कृताः किञ्च शिरसि छिन्ने अपि सति अन्ये पतिताः सन्तः पुनः उत्थिताः शिरांसि मस्तके अन्ये दैत्याः ॥ ६१ ॥ कबन्धा इति हे राजन् कबन्धाः गृहीतपरमायुधाः सन्तः देव्या सह युयुधुः परमं च तत् आयुधं च परमायुधं गृहीतं

परमायुधं यैः ते गृहीतपरमायुधाः परमं उत्कृष्टं आयुधं शस्त्रं अपरे छिन्नशिरसः कबन्धाः तूर्यलयाश्रिताः सन्तः तत्र युद्धे ननृतुः अपरे अन्ये छिन्नानि शिरांसि येषां ते छिन्नशिरसः तूर्याणां लयः तूर्यलयः तूर्यलयेन आश्रिताः तूर्यलयाश्रिताः तूर्याणां आनकानां लयः वाद्यं आश्रिताः ॥ ६२ ॥ हे राजन् अन्ये महासुराः खड्गशक्त्यृष्टिपाणयः सन्तः देवीं तिष्ठ तिष्ठ इति भाषन्तः अन्ये महासुराः महादैत्याः खड्गश्च शक्तिश्च ऋष्टिश्च ताः खड्गशक्त्यृष्टयः खड्गशक्त्यृष्टयः पाणिषु येषां ते खड्गशक्त्यृ-

लयाश्रिताः ॥ ६२ ॥ कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाण-
यः तिष्ठतिष्ठेतिभाषंतोदेवीमन्ये महासुराः ॥ ६३ ॥ पातितै र
थनागाश्वैरसुरैश्ववसुन्धरा अगम्यासाभवत्तत्रयत्राभूत्समहार
णः ॥ ६४ ॥ शोणितौघामहानद्यःसद्यस्तत्रविसुस्रुवुः मध्येचा

ष्टिपाणयः ऋष्टिः उभयतोधाराखड्गः पाणिषु हस्तेषु ॥ ६३ ॥ * * * *

पातितैरिति हे राजन् तत्र सा वसुन्धरा पातितैः रथनागाश्वैः किञ्च असुरैः अगम्या अभवत् तत्र यत्र महारणः अभूत् वसुन्धरा पृथिवी रथाश्च नागाश्च अश्वाश्च ते रथनागाश्वाः तैः रथनागाश्वैः नागाः हस्तिनः गंतुं योग्या गम्या न गम्या अगम्या महांश्चासौ रणश्च महारणः रणः संग्रामः ॥ ६४ ॥

शोणितेति हे राजन् तत्र सद्यः असुरसैन्यस्य मध्ये वारणासुरवाजिनां शोणितौघा महानद्यः प्र-
सुस्रुवुः तत्र तस्मिन् संग्रामे सद्यःतत्क्षणां असुराणां सैन्यं असुरसैन्यं तस्य असुरसैन्यस्य असुराणां
दैत्यानां वारणाश्च असुराश्च वाजिनश्च ते वारणासुरवाजिनः तेषां वारणासुरवाजिनां वारणाः हस्तिनः
असुराः दैत्याः वाजिनः अश्वाः शोणितानां ओघो यासु ताः शोणितौघाः शोणितानां रुधिराणां
ओघः प्रवाहः महत्यश्च ताः नद्यश्च महानद्यः ॥ ६५ ॥ क्षणेनेति हे राजन् तथा अम्बिका असुरा-
णां तत् महासैन्यं क्षणेन क्षयं निन्ये अम्बिका देवी असुराणां दैत्यानां महच्च तत् सैन्यं च महासै-

**सुरसैन्यस्यवारणासुरवाजिनां ॥ ६५ ॥ क्षणेनतन्महासैन्यमसुरा**
**णांतथांविका निन्येक्षयंयथावह्निस्तृणदारुमहाचयं ॥ ६६ ॥**
**सचसिंहोमहानादमुत्सृजन्धुतकेसरः शरीरेभ्योमरारीणा**

न्यं क्षणेन क्षणमात्रेण क्षयं नाशं निन्ये प्राप्तवती कं कः इव तृणदारुमहाचयं वह्निः यथा तृणानि
च दारूणि च तृणदारूणि तृणदारूणां महाचयः तृणदारुमहाचयः दारूणि काष्ठानि महाचयः
समूहः वह्निः अग्निः यथा इव ॥ ६६ ॥ * * * *
सचेति किञ्च सः सिंहः महानादं उत्सृजन् सन् अमरारीणां शरीरेभ्यः असून् विचिन्वति इव
महांश्चासौ नादश्च महानादः तं महानादं नादः शब्दः उत्सृजन् सन् कुर्वन् मन् अमराणां अरयः

दैत्यः सैनं

अमरारयः तथा अमरारीणां अमराणां देवानां अरयः शत्रवः अमरारीणां दैत्यानां असून् प्राणान्
कथं भूतः सिंहः धुतकेसरः धुताः केसराः येन सः धुतकेसरः धुताः कम्पिताः केसरा ग्रीवाके-
शाः ॥ ६७ ॥ देव्येति हे राजन् तत्र देव्याः किञ्च तैः गणैः असुरैः तथा युद्धं कृतं तथा यथा एषां
देवाः दिवि पुष्पवृष्टिमुचः सन्तः तुतुषुः तत्र तस्मिन् संग्रामे देव्या इति कर्तुः असुरैर्दैत्यैः तथा ते-
न प्रकारेण यथा येन प्रकारेण एषां देवाः सुरगणा दिवि स्वर्गे पुष्पाणां वृष्टिः पुष्पवृष्टिः पुष्पवृष्टिं

मसूनिर्वविचिन्वति ॥ ६७ ॥ देव्यागणैस्तैस्तत्रकृतंयुद्धं तथासुरैः
यथैषांतुतुषुर्देवाःपुष्पवृष्टिमुचोदिवि ॥ ६८ ॥ इतिश्रीमार्कण्डे
यपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्ये महिषासुरवधोनाम
द्वितीयोध्यायः ॥ २ ॥ * * ऋषिरुवाच, *

मुञ्चन्ति वर्षन्ति ते पुष्पवृष्टिमुचः तुतुषुः सन्तुष्टाः बभवुः प्रसन्नाः बभूवुः ॥ ६८ ॥ इति श्रीनागोजी-
भट्टमस्तकृते सप्तसतीव्याख्याने महिषासुरसैन्यवधोनाम द्वितीयोऽध्यायः ॥ २ ॥ * *
ऋषिरुवाच, निहन्यमानमिति हे राजन् अथमहासुरः सेनानीचिक्षुरः तत् सैन्यं निहन्यमानं
अवलोक्य कोपात् अम्बिकां योद्धुं ययौ अथ अथेत्यनन्तरं सैन्यनाशानन्तरं महांश्चासौ असुरश्च महा-

सुरः असुरः दैत्यः सेनांनयतीति सेनानीः नयति प्राप्नोति सेनानीः सेनापतिः निहन्यते इति नि-
हन्यमानं अवलोक्य दृष्ट्वा कोपात् क्रोधात् अम्बिकां देवीं ययौ आजगाम ॥ १ ॥ * *
सइति हे राजन् सः असुरः देवीं शरवर्षेण ववर्ष कः केन कमिव तोयवर्षेण मेरुगिरेः शृङ्गं तो-
यदः यथा सः असुरः चिक्षुराख्यः दैत्यः शराणां वर्षं शरवर्षं तेन शरवर्षेण शराणां बाणानां वर्षं
वृष्टिः तोयं ददातीति तोयदः तोयं जलं तोयदः मेघः तोयानां वर्षं तोयवर्षं तेन तोयवर्षेण तो-

निहन्यमानंतत्सैन्यमवलोक्यमहासुरः सेनानीश्चिक्षुरःकोपा-
द्ययौयोद्धुमथाम्बिकां ॥ १ ॥ सदेवींशरवर्षेणववर्षसमरेसुरः
यथामेरुगिरेःशृङ्गंतोयवर्षेणतोयदः ॥ २ ॥ तस्यच्छित्वाततोदे
वीलीलयैवशरोत्करान् जघानतुरगान्बाणैर्यंतारंचैववाजिनां

यानां जलानां वर्षं वृष्टिः मेरुश्चासौ गिरिश्च मेरुगिरिः तस्य मेरुगिरेः मेरुः सुमेरुः गिरिः पर्वतः
शृङ्गं शिखरं यथा इव ॥ २ ॥ तस्येति हे राजन् ततः देवी तस्य शरोत्करान् लीलया एव छित्वा
तुरगान् किञ्च वाजिनां यन्तारं एव बाणैः जघान ततः तदनन्तरं बाणवृष्ट्यनन्तरं तस्य चिक्षुरस्य
शराणां उत्कराः शरोत्कराः तान्शरोत्करान् शराणां बाणानां उत्कराः समूहाः लीलया एव क्री-

दुर्गा० सप्त०

डया एव अनायांसेन एव तुरगान् अश्वान् वाजिनां अश्वानां यंतारं सारथिं चिच्छेदेति हे राजन् आशुगैः सद्यः धनुः किञ्च अति समुच्छ्रितं ध्वजं चिच्छेद किञ्च गात्रेषु छिन्नधन्वान एव विव्याध आशु गच्छन्तीति आशुगाः तैः आशुगैः आशु शीघ्रं आशुगैः बाणैः सद्यः तत्क्षणं अतिसमुच्छ्रितं अत्युन्नतं गात्रेषु हस्तपादादिषु छिन्नं धनुर्यस्य सः छिन्नधन्वा तं छिन्न धन्वानं ॥ ४ ॥ *

सः असुरः खड्गचर्मधरः सन् तां देवीं अभ्यधावत असुरः चिक्षुराख्यः दैत्यः धारयतीति धरः ख-

॥ ३ ॥ चिच्छेदचधनुःसद्योध्वजञ्चातिसमुच्छ्रितं विव्याधचैवगात्रे षुछिन्नधन्वानमाशुगैः ॥ ४ ॥ सछिन्नधन्वाविरथोहताश्वोहत सारथिः अभ्यधावततांदेवींखड्गचर्मधरोसुरः ॥ ५ ॥ सिंहमा हत्यखड्गेनतीक्ष्णधारेणमूर्द्धनि आजघानभुजेसव्येदेवीमप्यति

ड्गश्च चर्म च ते खड्गचर्मणी खड्गचर्मणोः धरः खड्गचर्मधरः धरति धारयति कथं भूतः असुरः छिन्न धन्वा छिन्नं धनुर्यस्य सः छिन्नधन्वा पुनः कथं भूतः असुरः विगतः रथो यस्य सः विरथः नष्टः पुनः कथं भूतः अ-सुरःहताः अश्वाः यस्य सः हताश्वः पुनः कथं भूतः असुरः हतः सारथिर्यस्य सः हतसारथिः ॥ ५ ॥ सिंहमिति हे राजन् अतिवेगवान् अपि सः तीक्ष्णधारेण खड्गेन सिंहं मूर्द्धनि आहत्य देवीं सव्ये

भुजे आजघान अतिवेगो विद्यते यस्य सः अतिवेगवान् सः चिक्षुरासुरः तीक्ष्णः धारो यस्य सः तीक्ष्णधारः तेन तीक्ष्णधारेण मूर्द्धनि मस्तके आहत्य ताडयित्वा सव्ये वामे ॥ ६ ॥ तस्य इति हे नृपनन्दन हे राजन् खङ्गः तस्याः भुजं प्राप्य पफाल ततः कोपात् अरुणलोचनः सः शूलं जग्राह नॄन् पालयतीति नृपः नृपस्य नन्दनः नृपनन्दनः तत्सम्बोधने हे नृपनन्दन नॄन् जनान् पालयति रक्षति नृपस्य राज्ञः नन्दनः पुत्रः तस्याः देव्याः पफाल विशीर्णः ततः तदनन्तरं खङ्गविशीर्णानंतरं कोपात् क्रोधात् अरुणे लोचने यस्य सः अरुणलोचनः अरुणे रक्ते लोचने नेत्रे सः चिक्षुरः ७ ॥

**वेगवान् ॥ ६ ॥ तस्याःखड्गोभुजंप्राप्यपफालनृपनन्दन ततो जग्राहशूलंसकोपादरुणलोचनः ॥ ७ ॥ चिक्षेपचततस्तत्तुभद्रकाल्यांमहासुरः जाज्वल्यमानंतेजोभीरविबिंबमिवांबरात् ॥**

चिक्षेपेति हे राजन् ततः महासुरः तु ततः भद्रकाल्यां चिक्षेप कमिव तेजोभिः जाज्वल्यमानं अंबरात् आगच्छत् रविबिम्बमिव ततः तदनंतरं शूलग्रहणानंतरं महासुरः चिक्षुरः तत् शूलं चिक्षेप प्रक्षिप्तवान् जाज्वल्यते इति जाज्वल्यमानं जाज्वल्यते दीप्यते अम्बरात् आकाशात् रवेः बिंबं रविबिंबं रवेः सूर्यस्य बिंबं मण्डलं ॥ ८ ॥ दृष्ट्वेति हे राजन् तदादेवी तत् शूलं आपतत् दृष्ट्वा शूलं अमुञ्चत तदा तस्मिन् काले आपतत् आगच्छत् शूलं त्रिशूलं महासुरः सः तत् शूलं तेन शतधा-

नीतं स चिक्षुरः तेन शूलेन शतधा शतखण्डेन नीतं प्रापितं ॥ ९ ॥ हते इति हे राजन् महावी-
र्ये महिषस्य चमूपतौ तस्मिन् हते सति त्रिदशार्दनः चामरः गजारूढः सन् आजगाम महत् वीर्यं
यस्य सः महावीर्यः तस्मिन् महावीर्ये वीर्यं पराक्रमः महिषस्य महिषासुरस्य चम्वाः पतिः चमूप-
तिः तस्मिन् चमूपतौ चम्वाः सेनायाः पतिः स्वामी तस्मिन् चिक्षुरासुरे त्रिदशान् अर्दयतीति
त्रिदशार्दनः त्रिदशान् देवान् अर्दयति मर्दयति पीडयति चामरः चामरासुरः गजे आरूढः गजा-

८ ॥ दृष्ट्वातदापतच्छूलंदेवीशूलममुञ्चत तच्छूलंशतधातेनन्नी
तंसचमहासुरः ॥ ९ ॥ हतेतस्मिन्महावीर्येमहिषस्यचमूपतौ
आजगामगजारूढश्चामरस्त्रिदशार्दनः ॥ १० ॥ सोपिशक्तिंमुमो
चाथदेव्यास्तामंबिकाद्रुतं हुंकाराभिहतांभूमौपातयामासनि-

रूढः गजे हस्तिनि आरूढः स्थितः आजगाम आगच्छत् ॥ १० ॥ सोपि हे राजन् सः अपि देव्याः
शक्तिं मुमोच अथ अम्बिका द्रुतं तां भूमौ पातयामास कथं भूतां तां हुङ्काराभिहतां पुनः कथं
भूतां तां निष्प्रभां सः चामरासुरः अथ अथेत्यनंतरं शक्तिप्रक्षेपणानंतरं अम्बिका देवी द्रुतं शीघ्रं
तां शक्तिं भूमौ पृथिव्यां हुङ्कारेण अभिहतां हुङ्काराभिहतां ताम् हुङ्काराभिहताम् अभिहतां ता-

डितां निष्प्रभां निर्गता प्रभा यस्याः सा निष्प्रभा तां निष्प्रभां प्रभा कांतिः ॥ ११ ॥ *
भग्नामिति हे राजन् निपतितां शक्तिं भग्नां दृष्ट्वा क्रोधसमन्वितः चामरः शूलं चिक्षेप सा अपि-
तत् वाणैः अच्छिनत् भग्नां त्रुटितां क्रोधेन समन्वितः क्रोधसमन्वितः समन्वितः युक्तः चामरासुरः
सा देवी तत् शूलं ॥ १२ ॥ तत इति हे राजन् ततः सिंहः समुत्पत्य गजकुम्भांतरस्थितः सन् त्रि-
दशारिणा तेन सह उच्चैः वाहुयुद्धेन युयुधे ततः तदनन्तरं शूलभग्नानन्तरं समुत्पत्य आप्लुत्य गज-

ष्प्रभां ॥ ११ ॥ भग्नांशक्तिंनिपतितांदृष्ट्वाक्रोधसमन्वितः चिक्षेप
चामरःशूलंवाणैस्तदपिसाच्छिनत् ॥ १२ ॥ ततःसिंहःसमुत्पत्य
गजकुम्भांतरस्थितः वाहुयुद्धेनयुयुधेतेनोच्चैस्त्रिदशारिणा ॥ १३
युद्ध्यमानौततस्तौतुतस्मान्नागान्महींगतौ युयुधातेतिसंरब्धौप्र

स्य कुम्भौ गजकुम्भौ गजकुम्भयोः अन्तरं गजकुम्भांतरं गजकुम्भांतरे स्थितः गजकुम्भांतरस्थितः गजस्य
हस्तिनः कुम्भौ गण्डस्थलौ अन्तरं मध्यं त्रिदशानां अरिः त्रिदशारिः तेन त्रिदशारिणा त्रिदशानां
देवानां अरिः शत्रुः तेन चामरासुरेण उच्चैः महता वाहुभ्यां युद्धं वाहुयुद्धं तेन वाहुयुद्धेन ॥ १३ ॥
युद्ध्यमानाविति हे राजन् ततः युद्ध्यमानौ तौ तु तस्मात् नागात् महीं गतौ सन्तौ अति दारुणैः

देहा...

प्रहारैः युयु[illegible] कथं भूतौ तौ अतिसंरब्धौ ततः तदनन्तरं बाहुयुद्धानन्तरं युध्येते इति युद्धमा-
नौ तौ सिंहचामरासुरौ नागात् गजात् महीं पृथिव्यां गतौ सन्तौ प्राप्तौ सन्तौ अतिसंरब्धौ अति-
क्रोधाविष्टौ ॥ १४ ॥ तत इति हे राजन् ततः मृगारिणा वेगात् खं उत्पत्य किञ्च निपत्य करप्र-
हारेण चामरस्य शिरः पृथक् कृतं ततः तदनन्तरं युद्धानन्तरं मृगाणां अरिः मृगारिः तेन मृगारि-
णा मृगाणां हरिणानां अरिः शत्रुः मृगारिणा सिंहेन खं आकाशं उत्पत्य गत्वा निपत्य अवतीर्य
करेण प्रहारः करप्रहारः तेन करप्रहारेण करो हस्तः चामरासुरस्य शिरः मस्तकं पृथक् भिन्नं १५

हारैरतिदारुणैः ॥ १४ ॥ ततोवेगात्खमुत्पत्यनिपत्यचमृगारिणा
राकरप्रहारेणशिरश्चामरस्यपृथक्कृतं ॥ १५ ॥ उदग्रश्चरणेदे
व्याशिलावृक्षादिभिर्हतः दन्तमुष्टितलैश्चैवकरालश्चनिपातितः

उदग्रश्चेति हे राजन् देव्या रणे उदग्रः शिलावृक्षादिभिः हतः किञ्च करालः एव दन्तमुष्टितलैः
निपातितः रणे संग्रामे उदग्रः उदग्रासुरः शिला च वृक्षश्च तौ शिलावृक्षौ शिलावृक्षौ आदिर्येषां
ते शिलावृक्षादयः तैः शिलावृक्षादिभिः शिला पाषाणः हतः प्रहारितः कराल एव करालासुरः
एव दन्ताश्च मुष्टयश्च तलाश्च ते दन्तमुष्टितलाः तैः दन्तमुष्टितलैः दन्ताः गजदन्तनिर्मितायुधानि
तलाः चपेटाः निपातितः प्रहारितः ॥ १६ ॥ देवीति हे राजन् देवी क्रुद्धा सती उद्धतं गदापातैः

चूर्णयामास किञ्च वाष्कलं भिन्दिपालेन चूर्णयामास तांश्च तथा अन्धकं वाणैः चूर्णयामास उद्धतं उद्धतासुरं गदाभिः पाताः गदापाताः तैः गदापातैः पाताः प्रहाराः वाष्कलं वाष्कलासुरं तांश्च ताम्रासुरं अन्धकं अन्धकासुरं हतः प्रहारितः ॥ १७ ॥ उग्रास्येति हे राजन् त्रिनेत्रा परमेश्वरी उग्रास्यं किञ्च उग्रवीर्यं तथैव च महाहनुं त्रिशूलेन जघान त्रीणि नेत्राणि यस्याः सा त्रिनेत्रा परा मा येषां ते परमाः परमाणां ईश्वरी परमेश्वरी परा उत्कृष्टा मा लक्ष्मीः परमाणां ब्रह्मादीनां ई-

॥ १६ ॥ देवीक्रुद्धागदापातैश्चूर्णयामासचोद्धतं वाष्कलंभिन्दिपा लेनवाणैस्ताम्रंतथांधकं ॥ १७ ॥ उग्रास्यमुग्रवीर्यंचतथैवचमहा हनुंत्रिनेत्राचत्रिशूलेनजघानपरमेश्वरी ॥ १८ ॥ विडालस्यासि नाकायात्पातयामासवैशिरः दुर्द्धरंदुर्मुखंचोभौशरैर्निन्येयम-

श्वरी नियन्त्री उग्रं आस्यं यस्य सः उग्रास्यः तं उग्रास्यं उग्रं भयङ्करं आस्यं मुखं उग्रनामानं दैत्यं उग्रंवीर्यं यस्य स उग्रवीर्यः तं उग्रवीर्यं उग्रं महत् वीर्यं पराक्रमः उग्रवीर्यनामानं दैत्यं महत् हनुर्यस्य सः महाहनुः महाहनुं महाहनुनामानं दैत्यं ॥ १८ ॥ * * विडालस्येति हे राजन् विडालस्य कायात् शिरः असिना पातयामास वै दुर्द्धरं किञ्च दुर्मुखं उ-

देहात् [illegible]

विदारिता

भौ शरैः यमस्य निन्ये विडालस्य विडालासुरस्य कायात् शिरः मस्तकं असिना खड्गेन वै इति निश्चयेन दुर्द्धरं दुर्द्धरासुरं दुर्मुखं दुर्मुखासुरं उभौ द्वौ शरैः बाणैः यमक्षयं यमगृहं निन्ये प्रापितवती ॥ १९ ॥ एवमिति हे राजन् एवं स्वसैन्ये संक्षीयमाणे सति महिषासुरः तु माहिषेणस्वरूपेण तान् गणान् त्रासयामास एवं अनेन प्रकारेण स्वस्य सैन्यं स्वसैन्यं तस्मिन् स्वसैन्ये महिषस्य इदं माहिषं तेन माहिषेण स्वरूपेण आकारेण तान् निश्वाससम्भवान् ॥ २० ॥ कांश्चिदिति हे राजन् महिषासुरः कांश्चित् तुण्डप्रहारेण भूतले पातयामास तथा अपरान् खुरक्षेपैः भूतले पातयामास किञ्च

क्षयं ॥ १९ ॥ एवंसंक्षीयमाणेतुस्वसैन्येमहिषासुरः माहिषेण स्वरूपेणत्रासयामासतान्गणान् ॥ २० ॥ कांश्चित्तुण्डप्रहारेण खुरक्षेपैस्तथापरान् लांगूलताडितांश्चान्यान्शृङ्गाभ्यांचविदा-

लांगूलताडितान् कांश्चित् भूतले पातयामास किञ्च शृङ्गाभ्यां विदारितान् अन्यान् भूतले पातयामास कांश्चित् वेगेन भूतले पातयामास अपरान् नादेन किञ्च भ्रमणेन भूतले पातयामास अन्यान् निश्वासपवनेन भूतले पातयामास कांश्चित् गणान् तुण्डेन प्रहारः तुण्डप्रहारः तेन तुण्डप्रहारेण तुंडेन मुखेन अपरान् अन्यान् गणान् खुरैः क्षेपाः खुरक्षेपाः तैः खुरक्षेपैः क्षेपाः क्षेपणानि लांगूलेन ताडिताः लांगूलताडिताः तान् लांगूलताडितान् लांगूलः पुच्छः ताडिताः प्रहारिताः कां-

श्चित् गणान् विदारितान् प्रहारितान् अन्यान् गणान् कांश्चित् गणान् अपरान् अन्यान् गणान् नादेन शब्देन भ्रमणेन मण्डलाकारगमनेन अन्यान् गणान् निःश्वासस्य पवनः निःश्वासपवनः तेन निःश्वासपवनेन पवनः वायुः भूतले पृथिवीतले ॥ २१ । २२ ॥ * * * *

निपात्येति हे राजन् सः असुरः प्रमथानीकं निपात्य महादेव्याः सिंहं हन्तुं अभ्यधावत ततः अम्बिका कोपं चक्रे असुरः महिषासुरः प्रमथानां अनीकं प्रमथानीकं तत् प्रमथानीकं प्रमथानां ग-

रितान् ॥ २१ ॥ वेगेनकांश्चिदपरान्नादेनभ्रमणेनच निःश्वास पवनेनान्यान्पातयामासभूतले ॥ २२ ॥ निपात्यप्रमथानीकम भ्यधावतसोसुरः सिंहंहंतुमहादेव्याःकोपंचक्रेततोंबिका २३ सोपिकोपान्महावीर्यःखुरक्षुण्णमहीतलः शृङ्गाभ्यांपर्वतानुच्चां

णानां अनीकं सैन्यं निपात्य प्रहृत्य महती चासौ देवी च महादेवी तस्याः महादेव्याः महती उत्कृष्टा हंतुं प्रहर्तुं ततः तदनन्तरं अभ्यधावनानन्तरं अम्बिका देवी कोपं क्रोधंचक्रे कृतवती ॥ २३ ॥

सोपीति हे राजन् महावीर्यः अपि सः कोपात् खुरक्षुण्णमहीतलः सन् उच्चान् पर्वतान् शृङ्गाभ्यां चिक्षेप क्षिप्त ननाद महत् वीर्यं यस्य सः महावीर्यः वीर्यः पराक्रमः सः महिषासुरः कोपात् क्रोधात्

…सचार…
देहा… शरीरा…

मह्याः तलं महीतलं खुरैः क्षुण्णं महीतलं येन सः खुरक्षुण्णमहीतलः मह्याः पृथिव्याः तलं तलभागः क्षुण्णं विदारितं ननाद शब्दं कृतवान् ॥ २४ ॥ वेगेति हे राजन् तस्य वेगभ्रमणविक्षुण्णा मही व्यशीर्यत लांगूलेन आहतः अब्धिः जलेन सर्वतः प्लावयामास तस्य महिषासुरस्य वेगेन युक्तं वेगयुक्तं वेगयुक्तं च तत् भ्रमणं च वेगभ्रमणं वेगभ्रमणेन विक्षुण्णा वेगभ्रमणविक्षुण्णा विक्षुण्णा कुण्ठिता शिथिलामही पृथिवी आहतः ताडितः अब्धिः समुद्रः सर्वतः सर्वंजगत् ॥ २५ ॥ हे राजन् घनाः धुतशृङ्गविभिन्नाः संतः खंडं खंडं यथास्यात्तथा ययुः किञ्च शतशः अचलाः श्वासानिलास्ताः सन्तः पुनः नभ-

**स्क्षिपचननादच ॥ २४ ॥ वेगभ्रमणविक्षुण्णामहीतस्यव्यशीर्यत**
**लांगूलेनाहतश्चाब्धिःप्लावयामाससर्वतः ॥ २५ ॥ धुतशृङ्गविभि**
**न्नाश्चखण्डखण्डंययुर्घनाःश्वासानिलास्ताःशतशोनिपेतुर्नभसो**

सः निपेतुः घनाः मेघाः धुते च ते शृङ्गे च धुतशृङ्गे धुतशृङ्गाभ्यां विभिन्नाः धुतशृङ्गविभिन्नाः धुते कम्पिते विभिन्नाः पृथक्भूता खण्डस्य खण्डाः यस्यां क्रियायां तत् खण्डखण्डं ययुः प्रापुः अचलाः पर्वताः श्वासस्य अनिलः श्वासानिलः श्वासानिलेन अस्ताः श्वासानिलास्ताः अनिलः वायुः अस्ताः आकाशं प्रति गताः नभसः आकाशात् ॥ २६ ॥ इति हे राजन् इति क्रोधसमाध्मातं आपतंतं महासुरं दृष्ट्वा सा चण्डिका तदा तद्वधाय कोपं चकरोत् इति अनेन प्रकारेण क्रोधेन समा-

ध्यात: क्रोधसमाध्यात: तं क्रोधसमाध्यातं समाध्यात: उद्दीपित: आपततीति आपतत् तं आपतं-
तं आपतति आगच्छति महासुरं महिषासुरं सा चण्डिका तदा तस्मिन्काले तस्य वध: तद्वध: त-
स्मै तद्वधाय तस्य महिषासुरस्य कोपं क्रोधं ॥ २७ ॥ सेति हे राजन् सा तस्य उपरि पाशं क्षित्वा
तं महासुरं ववन्ध किन्तु वद्ध: अपि स: महामृधे माहिषं रूपं तत्याज तस्य महिषासुरस्य महासुरं
महिषासुरं स: महिषासुर: महामृधे महासंग्रामे महिषस्य इदं माहिषं तत् माहिषं रूपं स्वरूपं ॥

चला: ॥ २६ ॥ इतिक्रोधसमाध्यातमापतंतंमहासुरं दृष्ट्वासाच
ण्डिकाकोपंतद्वधायतदाकरोत् ॥ २७ ॥ साक्षिप्त्वातस्यवैपाशंतं
ववन्धमहासुरं तत्याजमाहिषंरूपंसोपिवद्धोमहामृधे ॥ २८ ॥
तत:सिंहोभवत्सद्योयावत्तस्यांविकाशिर: छिनत्तितावत्पुरुष:

२८ ॥ तत् इति हे राजन् तत: स: सद्य: सिंह: अभवत् अम्बिका तस्य शिर: यावत् छिनत्ति ता-
वत् देव्या खड्गपाणि: पुरुष: अदृश्यत तत: तदनन्तरं माहिषरूपत्यागानन्तरं स: महिषासुर: सद्य:
तत्क्षणं अम्बिका देवी तस्य महिषासुरस्य शिर: मस्तकं खड्ग: पाणौ यस्य स: खड्गपाणि: पाणौ
हस्ते ॥ २९ ॥ * * * * * * * * * *

[illegible]कोद्धसचा[illegible]
[illegible]: देहा: [illegible]

तत इति हे राजन् ततः देवी आशु एव खड्गचर्मणा सार्द्धं तं पुरुषं सायकैः चिच्छेद ततः सः महागजः अभूत् ततः तदनन्तरं पुरुषदेहत्यागानन्तरं आशु एव शीघ्रमेव खड्गश्च चर्म च ते खड्गचर्मणी खड्गचर्मणोः समाहारः खड्गचर्म तेन खड्गचर्मणा सार्द्धं सह सायकैः वाणैः ततः तदनन्तरं पुरुषदेहच्छिन्नानन्तरं सः महिषासुरः महांश्चासौ गजश्च महागजः गजः हस्ती ॥ ३० ॥ करेणेति हे राजन् किञ्च सः तं महासिंहं करेण चकर्ष किञ्च जगर्ज्ज देवी तु कर्षतः करं खड्गेन निरकृन्तत

खड्गपाणिरदृश्यत २९ ततएवाशुपुरुषंदेवीचिच्छेदसायकैः तं खड्गचर्मणासार्द्धं ततःसोभून्महागजः ॥ ३० ॥ करेणचमहासिंहं तंचकर्ष जगर्ज्ज चकर्षतस्तुकरंदेवीखड्गेननिरकृन्तत ॥ ३१ ततोमहासुरोभूयोमाहिषंवपुरास्थितः तथैवक्षोभयामासत्रै-

सः महिषासुरः महांश्चासौ सिंहश्च महासिंहः तं महासिंहं करेण शुण्डादण्डेन कर्षतीति कर्षन् तस्य कर्षतः कर्षतः महागजस्य करं शुण्डादण्डं ॥ ३१ ॥ तत इति हे राजन् ततः महासुरः महिषं वपुः आस्थितः सन् भूयः तथैव सचराचरं त्रैलोक्यं क्षोभयामास ततः तदनन्तरं गजदेहत्यागानन्तरं महासुरः महिषासुरः महिषस्य इदं माहिषं तत् माहिषं वपुः शरीरं भूयः पुनः चराश्च अचराश्च ते

चराचरा: चराचरै: सह वर्तमानं सचराचरं चरा: जङ्गमा: मनुष्यादय: अचरा: स्थावरा: वृक्षपर्वतादय: सह वर्तमानं युक्तं त्रयो लोका: त्रैलोक्यं तत् त्रैलोक्यं ॥ ३२ ॥ तत इति हे राजन् तत: जगन्माता चण्डिका क्रुद्धा सती उत्तमं पानं पपौ किन्तु पुन:पुन: एव जहास कथं भूता चण्डिका अरुणलोचना तत: तदनन्तरं त्रैलोक्यव्याकुलावलोकनानन्तरं जगतां माता जगन्माता जगतां चतुर्दशलोकानां माता जननी उत्तमं श्रेष्ठं पानं मद्यपानं अरुणे लोचने यस्या: सा अरुणलोचना

लोक्यंसचराचरं ॥ ३२ ॥ तत:क्रुद्धाजगन्माताचण्डिकापानमुत्तमं पपौपुन:पुनश्चैवजहासारुणलोचना ॥ ३३ ॥ ननर्दचासुर:सोपिवलवीर्यमदोद्धत: विषाणाभ्यांचचिक्षेपचंडिकांप्रतिभूधरान् ॥ ३४ ॥ साचतान्प्रहितांस्तेनचूर्णयन्तीशरोत्करै:

अरुणे अरुणवर्णे लोचने नेत्रे ॥ ३३ ॥ * * * * * * *

ननर्देति हे राजन् वलवीर्यमदोद्धत: अपि स: असुर: ननर्द किन्तु विषाणाभ्यां चण्डिकां प्रति भूधरान् चिक्षेप वलं च वीर्यं च वलवीर्ये वलवीर्याभ्यां मद: वलवीर्यमद: वलवीर्यमदेन उद्धत: वलवीर्यमदोद्धत: वलंशारीरं वीर्यं उत्साह: उद्धत: उन्मत्त: असुर: महिषासुर: विषाणाभ्यां शृङ्गाभ्यां भूधरान् पर्वतान् ॥

कोङ्गसचार

: देहा: शरीरा

३४ ॥ साचोत हे राजन् किञ्च सा तेन प्रहितान् शरोत्करैः चूर्णयन्ती सती तं आकुलाचरं यथा स्यात्तथा उवाच कथं भूता सा मदोद्भूतमुखरागा सा चण्डिका तेन महिषासुरेण प्रहितान् चिप्ता-न् भूधरान् शराणां उत्कराः शरोत्कराः तैः शरोत्करैः शराणां वाणानां उत्कराः समूहाः चूर्णयन्ती इति चूर्णयती तं महिषासुरं आकुलानि अक्षराणि यस्यां क्रियायां तत् आकुलाचरं आकुलानि अर्द्धोच्चारितानि अक्षराणि वर्णानि मदेन उद्भूतः मुखे रागो यस्याः सा मदोद्भूतमुखरागा मदेन म-





उवाचतंमदोद्धूतमुखरागाकुलाक्षरं ३५। देव्युवाच, गर्ज्ज गर्ज्ज क्षणंमूढमधुयावत्पिबाम्यहं मयात्वयिहतेत्रैवगर्ज्जिष्यंत्याशुदेवताः ॥ ३६ ॥ ऋषिरुवाच, एवमुक्त्वासमुत्पत्यसारूढातंमहासुरं पादेनाक्रम्यकण्ठे चशूलेनैनमताडयत् ३७ ॥ * *

देन उद्भूतः अतिशयेन जातः रागः आरुण्यं ॥ ३५ ॥ देव्युवाच, हे मूढ अहं मधु यावत् पिबामि तावत् त्वं क्षणं गर्ज गर्ज मया त्वयि अत्र हते सति आशु एव देवताः गर्जिष्यन्ति मधु मद्यं क्षणं क्षणमात्रं अत्र अस्मिन् संग्रामे हते सति पञ्चत्वतां नीते सति आशु शीघ्रमेव देवता देवाः ॥ ३६ ॥ ऋषिरुवाच, एवमिति हे राजन् एवं उक्त्वा समुत्पत्य तं महासुरं आरूढा पादेन आक्रम्य

शूलेन कण्ठे एनं अताडयत् एवं अनेन प्रकारेण समुत्पत्य कूर्दनं कृत्वा तं महासुरं सा चण्डिका पादेन आक्रम्य दृढं वध्वा ॥ ३७ ॥ * * * * * * *

हे राजन् ततः तया पदा आक्रांतः अपि सः ततः निजमुखात् अर्द्धनिष्क्रांतः एव देव्याः वीर्येण अतिसंवृतः ततः तदनन्तरं शूलताडनानन्तरं तया देव्या पदा पादेन आक्रान्तः दृढं धृतः सः महिषासुरः ततः तस्मात् इति ततः निजं च तत् मुखं च निजमुखं तस्मात् निजमुखात् निजं स्वकीयं अर्द्धः निष्क्रांतः अर्द्धनिष्क्रान्तः एव निःसृतार्द्धकायः एव वीर्येण पराक्रमेण अति अतिश-

**ततःसोपिपदाक्रांतस्तयानिजमुखात्ततः अर्द्धनिष्क्रांतएवातिदेव्यावीर्येणसंवृतः ॥३८॥ अर्द्धनिष्क्रांतएवासौयुद्ध्यमानोमहासुरः तयामहासिनादेव्याशिरश्छित्वानिपातितः ॥ ३९**

येन संवृतः प्रतिवद्धोभूत् ॥ ३८ ॥ अर्द्धेति हे राजन् तया देव्या अर्द्धनिष्क्रान्तः एव युध्यमानो असौ महासुरः शिरः महासिना छित्वा निपातितः अर्द्धनिष्क्रान्तः एव निःसृतार्द्धकायः एव युद्ध्यमानः महासुरः महिषासुरः महांश्चासौ असिश्च महासिः तेन महासिना असिः खड्गः शिरः मस्तकं निपातितः नाशितः ॥ ३९ ॥ तत इति हे राजन् ततः सर्वं तत् ततः सर्वं तत् दैत्यसैन्यं हाहाकृतं सत् ननाद्भ किञ्च सकलाः देवतागणाः परं प्रहर्षं जग्मुः ततः तदनन्तरं महिषासुरवधानन्तरं

…क्रोद्गते…

…र्: देहाः शरीर…

सर्वं यथावद्वि० दैत्यानां सैन्यं दैत्यसैन्यं ननाश पलायितं सकलाः समस्ताः देवतानां गणाः देवतागणाः गणाः समूहाः परं अत्यन्तं प्रहर्षं आनन्दं जग्मुः प्रापुः ॥ ४० ॥ * * *
तुष्टुवुरिति हे राजन् सुराः तां देवीं दिव्यैः महर्षिभिः सह तुष्टुवुः किञ्च गन्धर्वपतयः जगुः किञ्च अप्सरोगणाः ननृतुः सुराः देवाः इन्द्रादयः दिवि भवाः दिव्याः तैः दिव्यैः दिवि स्वर्गे महांतश्च ते

ततोहाहाकृतंसर्वंदैत्यसैन्यंननाशतत् प्रहर्षंचपरंजग्मुःसकलादेवतागणाः ॥ ४० ॥ तुष्टुवुस्तांसुरादेवींसहदिव्यैर्महर्षिभिः जगुर्गन्धर्वपतयोननृतुश्चाप्सरोगणाः ॥ ४१ ॥ इति श्रीमार्कंडेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्ये महिषासुरवधःतृतीयोध्यायः ॥ ३

ऋषिरुवाच,

ऋषयश्च महर्षयः तैः महर्षिभिः महांतः श्रेष्ठाः तुष्टुवुः स्तुतवन्तः गन्धर्वाणां पतयः गन्धर्वपतयः पतयः स्वामिनः अप्सरसां गणाः अप्सरोगणाः अप्सरसां स्वर्वेश्यानां गणाः समूहाः ननृतुः नृत्यवन्तः ४१ ॥ इति श्रीनागोजीभट्टसम्मतकृते सप्तशतीव्याख्याने महिषासुरवधोनाम तृतीयोऽध्यायः ॥ ३ ॥
स्तुतिमाह ऋषिरुवाच, शक्रादयः इति हे राजन् देव्या अतिवीर्ये दुरात्मनि तस्मिन् किञ्च सुरारि-

बले निहते सति शक्रादयः सुरगणाः तां वाग्भिः तुष्टुवुः कथं भूताः सुरगणाः प्रणतिनम्रशिरोधरां-
साः पुनः कथं भूताः सुरगणाः प्रहर्षपुलकोद्गमचारुदेहाः अतिवीर्यं यस्य सः अतिवीर्यः तस्मिन्
अतिवीर्ये अति अत्यन्तं वीर्यं पराक्रमः दुष्टः आत्मा यस्य सः दुरात्मा तस्मिन् दुरात्मनि दुष्टः कु-
टिलः आत्मा अन्तःकरणं तस्मिन् महिषासुरे सुराणां अरयः सुरारयः सुरारीणां बलं सुरारिबलं त-
स्मिन् सुरारिबले सुराणां देवानां अरयः शत्रवः दैत्याः बलं सैन्यं निहते सति प्रहारिते सति शक्रः
आदिर्येषां ते शक्रादयः शक्रः इन्द्रः सुराणां गणाः सुरगणाः सुराणां देवानां गणाः समूहाः तां

**शक्रादयःसुरगणानिहतेतिवीर्येतस्मिन्दुरात्मनि सुरारिबलेच**
**देव्या तांतुष्टुवुःप्रणतिनम्रशिरोधरांसा वाग्भिःप्रहर्षपुलकोद्ग**
**मचारुदेहाः ॥ १ ॥** * * * * * *

देवीं तुष्टुवुः स्तुतवन्तः शिरोधराः अंसाश्च प्राण्यङ्गत्वादेकवद्भावः शिरोधरांसं प्रणत्या नम्रं शिरोध-
रांसं येषां ते प्रणतिनम्रशिरोधरांसाः शिरोधराः ग्रीवाः अंसाः स्कन्धाः नम्रं नम्रीभूतं पुलकानां
उद्गमः पुलकोद्गमः प्रहर्षेण पुलकोद्गमः प्रहर्षपुलकोद्गमः प्रहर्षपुलकोद्गमेन चारवश्च देहाः येषां ते
प्रहर्षपुलकोद्गमचारुदेहाः पुलकानां रोमांचानां उद्गमः प्रादुर्भावः प्रहर्षेण आनन्देन चारवः म-
नोहराः देहाः शरीराणि ॥ १ ॥ * * * * * * *

देव्येति नि[illegible]णशक्तिसमूहमूर्त्या यया देव्या आत्मशक्त्या इदं जगत् ततं वयं अखिलदेवम-
हर्षिपूज्यां तां अम्बिकां भक्त्या नताः स्मः सा नः शुभानि विदधातु देवानां गणाः देवगणाः निःशे-
षाश्च ते देवगणाश्च निःशेषदेवगणाः निःशेषदेवगणानां शक्तयः निःशेषदेवगणशक्तयः निःशेषदेवग-
णशक्तीनां समूहः निःशेषदेवगणशक्तिसमूहः निःशेषदेवगणशक्तिसमूह एव मूर्तिर्यस्याः सा निःशेषदे-
वगणशक्तिसमूहमूर्तिः तया निःशेषदेवगणशक्तिसमूहमूर्त्या देवानां इन्द्रादीनां गणाः समूहाः निः-
शेषाः समस्ताः मूर्तिः विग्रहः देह आत्मनः शक्तिः आत्मशक्तिः तया आत्मशक्त्या ततं विस्तारितं

**देव्याययाततमिदंजगदात्मशक्त्यानिःशेषदेवगणशक्तिसमूहमू
र्त्यां तामंबिकामखिलदेवमहर्षिपूज्यांभक्त्यानताःस्मविदधातु-
शुभानिसानः ॥ २॥ यस्याःप्रभावमतुलंभगवाननंतोब्रह्माहरश्च-**

देवाश्च महर्षयश्च ते देवमहर्षयः अखिलाश्च देवमहर्षयश्च अखिलदेवमहर्षयः अखिलदेवमहर्षिभिः
पूज्या अखिलदेवमहर्षिपूज्या तां अखिलदेवमहर्षिपूज्याम् देवा इन्द्रादयः महर्षयः नारदादयः
अखिलाः समस्ताः तां प्रसिद्धां अम्बिकां देवीं नताःस्मः प्रणताःस्मः सा देवी नः अस्माकं विदधा-
तु करोतु ॥ २ ॥ यस्या इति भगवान् अनन्तः किञ्च ब्रह्मा किञ्च हरः एते यस्याः अतुलं प्रभावं
किञ्च अतुलं बलं वक्तुं हि न अलं सा चण्डिका अखिलजगत्परिपालनाय किञ्च अशुभभयस्य

नाशाय मतिं करोतु अनन्तः सहस्रास्यः ब्रह्मा स्रष्टा हरः सर्वशक्तिशिवः यस्याः चण्डिकायाः अतुलं महान्तं प्रभावं तेजः अतुलं महत् बलं शारीरं हीति निश्चयेन न अलं न पर्याप्ताः न समर्थाः भवन्ति सा चण्डिका अखिलं च तत् जगच्च अखिलजगत् अखिलजगतः परिपालनं अखिलजगत्परिपालनं तस्मै अखिलजगत्परिपालनाय अखिलं समस्तं परिपालनं रक्षणं अशुभेभ्यः भयं अशुभभयं तस्य अशुभभयस्य मतिं बुद्धिं ॥ २ ॥ * * * * * * * *

या श्रीरिति या स्वयं सुकृतिनां भवनेषु श्रीः भवति या स्वयं पापात्मनां भवनेषु अलक्ष्मीः भव-

**नहिवक्तुमलंबलंच साचण्डिकाखिलजगत्परिपालनाय नाशा-**
**यचाशुभभयस्यमतिंकरोतु ॥ २ ॥ याश्रीःस्वयंसुकृतिनांभवने-**
**ष्वलक्ष्मीः पापात्मनांकृतधियांहृदयेषुबुद्धिः श्रद्धासतांकुल-**

ति या स्वयं कृतधियां हृदयेषु बुद्धिः भवति या स्वयं सतां हृदयेषु श्रद्धा भवति या स्वयं कुलजनप्रभवस्य हृदयेषु लज्जा भवति वयं तां त्वां नताःस्मः हे देवि त्वं विश्वं परिपालय या देवी स्वयं स्वयमेव सुकृतमस्ति येषां ते सुकृतिनः तेषां सुकृतिनां सुकृतं पुण्यं सुकृतिनां पुण्यात्मनां भवनेषु गृहेषु श्रीः लक्ष्मीः या देवी स्वयं स्वयमेव पापं विद्यते येषां ते पापात्मानः तेषां पापात्मनां भवनेषु गृहेषु अलक्ष्मीः ज्येष्ठा दरिद्रा या देवी स्वयं स्वयमेव कृतधियां निर्मलान्तःकरणानां बुद्धिः स्वर्गाप-

वर्गसाधनं स्तुति या देवी स्वयं स्वयमेव सतां सज्जनानां श्रद्धा आस्तिक्या बुद्धिः या देवी स्वयमेव कुले जनः कुलजनः कुलजनात् प्रभवो यस्य सः कुलजनप्रभवः तस्य कुलजनप्रभवस्य प्रभवः जन्म कुलजनप्रभवस्य शुद्धवंशजन्मनः लज्जा अकरणीयाप्रवृत्तिजनकान्तःकरणवृत्तिविशेषः तां देवीं नताः स्मः प्रणताःस्मः विश्वं जगत् ॥ ४ ॥ किमिति हे देवि वयं सर्वेषु असुरदेवगणादिकेषु अचिंत्यं एतत् तव रूपं किं वर्णयामः किंच असुरक्षयकारिभूरि अचिन्त्यं अतिवीर्यं किंवर्णयामः किञ्च अन्यदपि आहवेषु अति यानि अचिन्त्यानि तव चरितानि तानि किं वर्णयामः सर्वेषु समस्तेषु असुराश्च

जनप्रभवस्यलज्जा तांत्वांनताःस्मपरिपालयदेविविश्वं ॥ ४ ॥ किं
वर्णयामतवरूपमचिंत्यमेतत्किञ्चातिवीर्यमसुरक्षयकारिभूरि
किञ्चाहवेषुचरितानितवातियानिसर्वेषुदेव्यसुरदेवगणादिकेषु

देवाश्च गणाश्च ते असुरदेवगणाः असुरदेवगणाः आदिर्येषां ते असुरदेवगणादिकाः तेषु असुरदेवगणादिकेषु असुराः दैत्याः देवाः शिवादयः गणाः प्रमथाः अचिन्त्यं चिन्तितुं योग्यं चिन्त्यं न चिंत्यं अचिन्त्यं तत् अचिन्त्यं अचिन्त्यं सर्वोत्कृष्टत्वात् अनिरूपणीयं रूपं स्वरूपं किं केन प्रकारेण किं केन प्रकारेणेति सर्वत्र असुराणां क्षयः असुरक्षयः असुरक्षयं करोतीति असुरक्षयकारि तत् असुरक्षयकारि क्षयः नाशः भूरि महत् अति अत्युत्कृष्टं वीर्यं पराक्रमं आहवेषु युद्धेषु अति यानि अत्यु-

तृप्तिहेतुः भवति सा स्वधा त्वमेवासि अत एव जनैः देवकर्मणि त्वं स्वाहा उच्चार्यसे किञ्च पितृकर्मणि त्वं स्वधा उच्चार्यसे सुराणां समूहः सुरता समस्ता चासौ सुरता च समस्तसुरता सुराणां देवानां समस्ता सम्पूर्णा समस्तसुरता सकलसुरसमूहः यस्याः स्वाहायाः समुदीरणेन उच्चारणेन सकलेषु समस्तेषु मखेषु यज्ञेषु प्रयाति प्राप्नोति पितॄणां गणः पितृगणः तस्य पितृगणस्य गणः समूहः तृप्तेः हेतुः तृप्तिहेतुः हेतुः कारणं ॥ ७ ॥ * * * * * *

हे देवि अविचिन्त्यमहाव्रता या विद्या मुक्तिहेतुः भवति भगवती परमा सा विद्या त्वमेवासि

तिसकलेषुमखेषुदेवि स्वाहासिवैपितृगणस्यचतृप्तिहेतु रुच्चार्यसेत्वमतएवजनैःस्वधाच ॥ ७ ॥ यामुक्तिहेतुरविचिंत्यमहाव्रताच अभस्यसेसुनियतेंद्रियतत्वसारैः मोक्षार्थिभिर्मुनिभिर-

हि अस्तसमस्तदोषैः सुनियतेंद्रियतत्वसारैः मोक्षार्थिभिः मुनिभिः त्वं अभ्यस्यसे महच्च तत् व्रतं च महाव्रतं विशेषेण चिन्तितुं योग्यं विचिन्त्यं न विचिन्त्यं अविचिन्त्यं अविचिन्त्यं महाव्रतं यस्याः सा अविचिन्त्यमहाव्रता अविचिन्त्यं अनुष्ठेयत्वञ्चिन्त्यं चिन्ताया अविषयं महाव्रतं अहिंसासत्यमस्तेयब्रह्मचर्यपरिग्रहरूपं योगशास्त्रप्रसिद्धं भगवती भव्यवद्विषया परमा उत्कृष्टा विद्या तद्विषया वरणभक्तिका ब्रह्मज्ञानरूपा हि यतः समस्ताश्च ते दोषाश्च समस्तदोषाः अस्ताः समस्तदोषाः येषां तैर-

त्कृष्टानि चरितानि कर्माणि ॥ ५ ॥ * * * * * * *

हेतुरिति हे देवि त्वं समस्तजगतां हेतुः भवसि किञ्च हरिहरादिभिः अपि त्रिगुणा अपि अपारा त्वं दोषैः न ज्ञायसे किञ्च त्वं सर्वाश्रया भवसि किञ्च अखिलं इदं जगत् तव अंशभूतं भवति किञ्च त्वं अव्याकृता भवसि हि किञ्च परमा त्वं सर्वस्य आद्या प्रकृतिः भवसि समस्तानि जगन्ति च समस्तजगति तेषां समस्तजगतां समस्तानि संपूर्णानि जगन्ति चतुर्दशलोकाः हेतुः मूलकारणं हरिश्च हरश्च तौ हरिहरौ हरिहरौ आदिर्येषां ते हरिहरादयः तैः हरिहरादिभिः हरिः विष्णुः हरः शिवः च-

५ हेतुःसमस्तजगतांत्रिगुणापिदोषैर्नज्ञायसेहरिहरादिभिरप्यपा
रा सर्वाश्रयाखिलमिदंजगदंशभूत मव्याकृताहिपरमाप्रकृति
स्त्वमाद्या ॥ ६ ॥ यस्याःसमस्तसुरतासमुदीरणेन तृप्तिं प्रया-

यो गुणाः यस्याः सा त्रिगुणा गुणाः सत्वरजस्तमांसि नास्ति पारो यस्याः सा अपारा पारः अन्तः दोषैः रागादिभिः सर्वः आश्रयो यस्याः सा सर्वाश्रया आश्रयः कार्यं अखिलं समस्तं अव्याकृता षड्विधविकाररहिता नामरूपरहिता हीति निश्चयेन परा मा यस्याः सा परमा परा उत्कृष्टा मा माया अद्या प्रथमा प्रकृतिः सत्वरजस्तमसां साम्यावस्था ॥ ६ ॥ यस्या इति हे देवि समस्तसुरता यस्याः समुदीरणेन सकलेषु मखेषु तृप्तिं प्रयाति सा स्वाहा त्वमेवासि किञ्च या स्वधा पितृगणस्य

स्तसमस्तदोषा: तै: अस्तसमस्तदोषै: समस्ता: सम्पूर्णा: दोषा: रागादय: अस्ता: नष्टा: तत्वं सारो ये-
षां ते तत्वसारा: सुनियतानि इन्द्रियाणि यै: ते सुनियतेंद्रिया: सुनियतेंद्रिया: अत एव तत्वसा-
रा: ते सुनियतेंद्रियतत्वसारा: तै: सुनियतेंद्रियतत्वसारै: तत्वं ब्रह्मैव सुनियतानि वशीकृतानि
इन्द्रियाणि मनश्चक्षुरादीनि मोक्ष एव अर्थ: मोक्षार्थोऽस्ति येषां ते मोक्षार्थिन: तैर्मोक्षार्थिभि: अर्थ:
प्रयोजनं मननशीला: मुनय: तै: मुनिभि: ॥ ८ ॥ *

शब्देति हे देवि त्वं शब्दात्मिका भवसि त्वं सुविमलर्ग्यजुषां किञ्च उद्गीथरम्यपदपाठवतां साम्नां

स्तसमस्तदोषैर्विद्यासिसाभगवतीपरमाहिदेवि ॥ ८ ॥ शब्दा
त्मिकासुविमलर्ग्यजुषांनिधान मुद्गीथरम्यपदपाठवतांचसाम्नां
देवीत्रयीभगवतीभवभावनाय वार्त्ताचसर्वजगतांपरमार्त्तिहं-

निधानं भवसि या देवी भगवती त्रयी भवति सा त्वमेवासि या वार्त्ता भवभावनाय भवति सा
वार्त्ता त्वमेवासि त्वं सर्वजगतां परमार्तिहंत्री भवसि शब्द: आत्मा यस्या: सा शब्दात्मिका आत्मा
स्वरूपं शब्दात्मिका शब्दब्रह्मरूपा ऋक् च यजूंषि च तानि ऋग्यजूंषि सुविमलानि च तानि ऋग्य-
जूंषि च सुविमलर्ग्यजूंषि तेषां सुविमलर्ग्यजुषां ऋक् ऋक्वेदशाखा: यजु: यजुर्वेदशाखा: सुविम-
लानि अपौरुषेयत्वेन दोषरहितानि पदानां पाठ: पदपाठ: उद्गीथेन रम्य: उद्गीथरम्य: उद्गीथरम्य-

चासौ पदपाठश्च उद्गीथरम्यपदपाठः उद्गीथरम्यपदपाठो विद्यते येषां ते उद्गीथरम्यपदपाठवन्ति तेषां उद्गीथरम्यपदपाठवताम् उद्गीथेन भक्तिविशेषेण रम्यः मनोहरः साम्नाम् सामवेदशाखानाम् देवीद्योतनशीला भगवती भगवद्विषया वेदत्रयी सा वेदत्रयी त्रयी वार्ता कृषिवाणिज्यपशुपालनरूपा भवन्तीति भवाः भवानां भावनं भवभावनं तस्मै भवभावनाय भवानां प्राणिनां भावनं जीवनं सर्वाणि च तानि जगन्ति सर्वजगन्ति तेषां सर्वजगताम् सर्वाणि समस्तानि जगन्ति चतुर्दशलोकाः परमा चासौ अर्तिश्च परमार्त्तिः परमार्त्तेः हन्त्री परमार्त्तिहन्त्री परमा अतिशयिता उत्कृष्टा अर्त्तेः पीडाहन्त्री ॥ ९ ॥

**मेधासि देवि विदिताखिलशास्त्रसारा दुर्गासि दुर्गभवसागरनौरसङ्गा श्रीः कैटभारिहृदयैककृताधिवासा गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ १० ॥**

* * * *

* * *

मेधासीति हे देवि विदिताखिलशास्त्रसारा या मेधा भवति सा मेधा त्वमेवासि त्वं दुर्गा असि असङ्गा त्वं दुर्गभवसागरनौ असि कैटभारिहृदयैककृताधिवासा या श्रीः भवति सा श्रीः त्वमेवासि शशिमौलिकृतप्रतिष्ठा या गौरी भवति सा गौरी त्वमेवासि अखिलानि च तानि शास्त्राणि च अखिलशास्त्राणि अखिलशास्त्राणां सारः अखिलशास्त्रसारः विदितः अखिलशास्त्रसारो यया सा

विदिताखिलशास्त्रसारा अखिलानि समस्तानि शास्त्राणि व्याकरणादीनि सारः तत्वं विदितः
ज्ञातः मेधा सरस्वती सा मेधा त्वं त्वमेवासि दुर्गा दुर्जया दुःखेन जेतुं अशक्या दुर्जया नास्ति संगो
यस्याः सा असङ्गा सङ्गः सम्बन्ध भव एव सागरः भवसागरः दुर्गश्चासौ भवसागरश्च दुर्गभवसागरः
दुर्गभवसागरस्य नौः दुर्गभवसागरनौः भव एव संसार एव सागरः समुद्रः दुर्गः गहनः नौः ज्ञान-
हारा कैटभारिः हृदयं कैटभारिहृदयं तस्मिन्कैटभारिहृदये एकः कृतः अधिवासो यया सा कैटभा-
रिहृदयैककृताधिवासा कैटभारिः विष्णोः अधिवासः स्थानं श्रीः लक्ष्मीः शशिःमौलौ यस्य सः शशि-

**ईषत्सहासममलंपरिपूर्णचन्द्र बिम्बानुकारिकनकोत्तमकांति**
**कांतं अत्यद्भुतंप्रहृतमात्तरुषातथापिवक्त्रं विलोक्यसहसामहि**
**षासुरेण ॥ ११ ॥ * * * * ***

मौलिः मस्तकं शशिमौलिकृतप्रतिष्ठा शशी चन्द्रः मौलिः मस्तकं शशिमौ-
मौलिः शशिमौलौ कृता प्रतिष्ठा यया * * * * *
लौ शिवे प्रतिष्ठा स्थितिः गौरी [illegible]र्वती ॥ १० ॥
ईषदिति हे देवि तव वक्त्रं विलोक्यापि आत्तरुषा महिषासुरेण सहसा तथा यत् प्रहृतं तत् अ-
त्यद्भुतं भवति कथं भूतं वक्त्रं ईषत्सहासं पुनः कथं भूतं वक्त्रं अमलं पुनः कथं भूतं वक्त्रं परिपूर्ण-
चन्द्रविम्बानुकारि पुनः कथं भूतं वक्त्रं कनकोत्तमकांति पुनः कथं भूतं कांतं वक्त्रं मुखं विलोक्यापि

दृष्ट्वापि आत्ता रुट् यस्य सः आत्तरुट् तेन आत्तरुषा आत्ता प्राप्ता रुट् क्रोधः सहसा दर्शनसमकाल-मेव तथा अति निष्ठुरं अत्यद्भुतं अत्याश्चर्यं ईषद्धासेन सह वर्त्तमानं ईषत्सहासं तत् ईषत्सहासं ईष-द्धासेन स्वल्पहासेन सह वर्तमानं युक्तं अमलं स्वच्छं परिपूर्णश्चासौ चन्द्रश्च परिपूर्णचन्द्रः परिपूर्ण-चन्द्रस्य बिम्बः परिपूर्णचन्द्रबिम्बः परिपूर्णचन्द्रबिम्बं अनुकरोतीति परिपूर्णचन्द्रबिम्बानुकारि तत् परिपूर्णचन्द्रबिम्बानुकारि बिम्बः मण्डलं अनुकरोति सदृशी करोति कनकेषु उत्तमः कनकोत्तमः कनकोत्तमस्य कांतिरिवकांतिर्यस्य तत् कनकोत्तमकांति कनकेषु सुवर्णेषु उत्तमः श्रेष्ठः कांतं म-

दृष्ट्वातुदेविकुपितंभ्रुकुटीकरालं मुद्यच्छशांकसदृशच्छवियन्नस-द्यः प्राणान्मुमोचमहिषस्तदतीवचित्रं कैर्जीव्यतेहिकुपितांतक दर्शनेन ॥ १२ ॥

* * * * *

नोहरं ॥ ११ ॥

* *

दृष्ट्वात्विति हे देवि तव वक्त्रं दृष्ट्वा महिषः तु प्राणान् सद्यः यत् न मुमोच तत् अतिविचित्रं भ-वति कथं भूतं वक्त्रं कुपितं पुनः कथं भूतं भ्रुकुटीकरालं पुनः कथं भूतं वक्त्रं उद्यच्छशांकसदृशच्छ-वि कुतः कस्माद्धेतोः हि यतः हेतोः कैः कुपितांतकदर्शनेन जीव्यते न जीव्यते इति भावः वक्त्रं मुखारविन्दं महिषः महिषासुरः सद्यः तत्क्षणं अतीवचित्रं अतीवाश्चर्यं कुपितं क्रोधयुक्तं भ्रुवोः कुटी

भ्रुकुटी भृकुत्या करालं तत् भृकुटीकरालं कुटी वक्रता करालं भीषणं भयङ्करं उद्यतीति उद्यत्
शगश्चासौ शशांकश्च उद्यच्छशांकः उद्यच्छशांकस्य सदृशी छविर्यस्य तत् उद्यच्छशांकसदृशीछवि श-
शांकः चन्द्रः सदृशी तुल्या छविः कांतिः कुपितश्चासौ अन्तकश्च कुपितांतकः कुपितांतकस्य दर्शनं
कुपितांतकदर्शनं तेन कुपितान्तकदर्शनेन कुपितः क्रोधायमानः अन्तकः कालः ॥ १२ ॥ देवीति हे
देवि त्वं प्रसीद परमा भवती त्वं कोपवती सती सद्यः भवाय कुलानि विनाशयसि त्वया महिषा-
सुरस्य सुविपुलं एतत् वलं अस्तं यत् नीतं अस्माभिः अधुनैव एतत् विज्ञातं प्रसीद प्रसन्ना भव परा

**देविप्रसीदपरमाभवतीभवाय सद्योविनाशयसिकोपवतीकुला-**
**निविज्ञातमेतदधुनैवयदस्तमे तन्नीतंवलंसुविपुलंमहिषासुर-**
**स्य ॥ १३ ॥ * * * * * * ***

मा यस्याः सा परमा परा मा सानुग्रहा मा बुद्धिः कोपोस्ति यस्याः सा कोपवती कोपः क्रोधः सद्यः
तत्क्षणं भवाय संसाराय कुलानि सुविपुलं महत् वलं सैन्यं अस्तं नाशं नीतं प्रापितं ॥ १३ ॥
तत इति हे देवि अभ्युदयदा भवती येषां सदा प्रसन्ना भवति ते जनपदेषु सम्मताः भवन्ति तेषां
धनानि भवन्ति तेषां यशांसि भवन्ति किञ्च तेषां धर्मवर्गः न सीदति निभृतात्मजभृत्यदाराः ते ए-
व धन्याः भवन्ति अभ्युदयं ददातीति अभ्युदयदा अभ्युदयं सर्वमनोरथं येषां जनानां सदा सर्वदा ते

जनाः जनपदेषु देशेषु सम्मताः महाजनाङ्गीकृताः तेषां जनानां धनानि तेषां जनानां यशांसि कीर्त्तयः तेषां जनानां धर्मवर्गः धर्मघटितोवर्गः धर्मवर्गः धर्मवर्गः धर्मार्थकाममोक्षरूपः न सीदति न नष्टो भवति अत्मजाश्च भृत्याश्च दाराश्च ते चात्मजभृत्यदाराः निभृताः आत्मजभृत्यदाराः येषां ते निभृतात्मजभृत्यदाराः आत्मजाः पुत्राः भृत्याः सेवकाः दाराः कलत्राणि निभृताः नितरां पोषिताः नितरां

तेसम्मताजनपदेषुधनानितेषां तेषांयशांसिनचसीदतिधर्मवर्गः धन्यास्तएवनिभृतात्मजभृत्यदारा येषांसदाभ्युदयदाभवतीप्रसन्ना ॥ १४ ॥ धर्म्याणिदेविसकलानिसदैवकर्माण्यत्याहृतःप्रतिदिनंसुकृतीकरोति स्वर्गंप्रयातिचततोभवतीप्रसादाल्लोकत्रयेपिफलदाननुदेवितेन ॥ १५ ॥ * * *

अत्यतं ते एवजनाः धन्याः पुण्यवत्वेन प्रसिद्धाः ॥ १४ ॥ धर्म्याणीति हे देवि भवतीप्रसादात् यः सुकृती अत्याहृतः सन् धर्म्याणि सकलानि कर्माणि प्रतिदिनं सदैवकरोति सः सुकृती ततः स्वर्गं प्रयाति हे देवि तेन अस्माभिः त्वं लोकत्रये अपि ननु फलदा इति ज्ञायसे भवत्याः प्रसादः भवती प्रसादः यस्मात् भवतीप्रसादात् प्रसादः प्रसन्नता सुकृती प्राग्जन्मार्जितपुण्यवान् अत्याहृतः सन्

अतिश्रद्धावान् सन् धर्मादनुपेतानि धर्म्याणि तानि धर्म्याणि अनुपेतानि युक्तानि सकलानि नित्यनैमित्तिकादीनि दिनं दिनं प्रतीति प्रतिदिनं सदैव सर्वदैव ततः तदनन्तरं नित्यनैमित्तिककर्मानुष्ठानानन्तरं प्रयाति प्राप्नोति तेन कारणेन लोकानां त्रयं लोकत्रयं तस्मिन् लोकत्रये लोकानां स्वर्गमर्त्यपातालानां त्रयं समूहः ननु इति निश्चयेन फलं ददातीति फलदा फलं स्वर्गादिफलं १५

दुर्गेति हे दुर्गे जनैः त्वं स्मृता सती अशेषजन्तोः भीतिं हरसि स्वस्थैः त्वं स्मृता सती अतीव शुभां मतिं ददासि हे दारिद्र्यदुःखभयहारिणि सर्वोपकारकरणाय सदार्द्रचिता त्वत् अन्या का

दुर्गेस्मृताहरसिभीतिमशेषजन्तोः स्वस्थैःस्मृतामतिमतीवशुभांददासि दारिद्र्यदुःखभयहारिणिकात्वदन्या सर्वोपकारकरणायसदार्द्रचित्ता ॥ १६ ॥

* * * *

भवति न कापीत्यर्थः अशेषश्चासौ जंतुश्च अशेषजन्तुः तस्य अशेषजन्तोः अशेषः संपूर्णः जन्तुः प्राणी भीतिं भयं स्वस्थैः स्वस्थचित्तैः जनैः अतीव अत्यन्तमेव शुभां कल्याणकारिणीं मतिं बुद्धिं दरिद्रस्य भावः दारिद्र्यं दारिद्र्यात् दुःखं दारिद्र्यदुखं ते दारिद्र्यदुःखात् भयं दारिद्र्यदुःखभयं दारिद्र्यदुःखभयं तं हरतीति दारिद्र्यदुःखभयहारिणी तत्सम्बोधने हे दारिद्र्यदुःखभयहारिणि भावः धर्मः अयं चासः सर्वेषां उपकारः सर्वोपकारः सर्वोपकारस्य करणं सर्वोपकारकरणं तस्मै सर्वोपकारकरणाय

कान स्व
सर्वेषां जनानां सदा आर्द्रं चित्तं यस्याः सा सदार्द्रचित्ता सदा सर्वदा आर्द्रं कोमलं चित्तं अन्तः करणं त्वत् त्वत्तः ॥ १६ ॥ एभिरिति हे देवि जगत् हतैः एभिः सुखं उपैति एते नाम नरकाय चिराय पापं कुर्वन्तु तथा संग्राममृत्युं अधिगम्य दिवं प्रयान्तु इति मत्वा त्वं अहितान् नूनं विनिहंसि हतैः प्रहारितैः एभिः दैत्यैः उपैति प्राप्नोति उपैतीत्यर्थः एते दैत्याः नाम इति अभ्युपगमे नरकायचिरकालपर्यन्तं संग्रामे मृत्युः संग्राममृत्युः तं संग्राममृत्युं मृत्युः मरणं अधिगम्य प्राप्य दिवं स्वर्गं प्रयान्तु गच्छन्तु इति हेतुद्वयं मत्वा मनसि विचार्य अहितान् शत्रून् दैत्यान् नूनं निश्चयेन वि-

**एभिर्हतैर्जगदुपैतिसुखन्तथैते कुर्वंतुनामनरकायचिरायपापं संग्राममृत्युमधिगम्यदिवंप्रयांतु मत्वेतिनूनमहितान्विनिहंसि-देवि ॥ १७ ॥** * * * * * *

निहंसि नाशयसि ॥ १७ ॥ * * *

हे देवि भवती सर्वासुरान् दृष्ट्वा एव भस्म किन्न प्रकरोति त्वं अरिषु शस्त्रं यत् प्रहिणोषि तत् रिपवः अपि शस्त्रपूताः सन्तः लोकान् हि प्रयान्तु इत्यं तेषु अपि ते मतिः अति साध्वी भवति सर्वे च ते असुराश्च ते सर्वासुराः तान् सर्वासुरान् सर्वे समस्ताः असुराः दैत्याः दृष्ट्वैव दर्शनमात्रेणैव अरिषु शत्रुषु दैत्येषु प्रहिणोषि पातयसि रिपवः शत्रवः दैत्याः शस्त्रैः पूताः शस्त्रपूताः पूताः पवि-

चाः लोकान् स्वर्गादिलोकान् ह्ये ति निश्चयेन प्रयांतु गच्छन्तु इत्थं अनेन प्रकारेण तेषु रिपुषु दै-
त्येषु ते तव मतिः बुद्धिः अतिसाध्वी अतिसमीचीना ॥ १८ ॥ खड्गे ति हे देवि असुराणां दृशः खड्गप्र-
भानिकरविस्फुरणैः तथा उग्रशूलाग्रकांतिनिवहेन विलयं यत् न आगताः सत् एतत् तव अंशुमत् इ-
न्दु खण्डयोग्याननं विलोयकतां चक्षुषां आश्रयः भवति असुराणां दैत्यानां दृशः दृष्टः खड्गस्य प्रभाः

दृष्ट्वैव किन्नभवतीप्रकरोतिभस्मसर्वासुरानरिषुयत्प्रहिणोषिशस्त्रं लोकान्प्रयांतुरिपवोपिहिशस्त्रपूता इत्थंमतिर्भवतितेष्वपितेऽतिसाध्वी ॥ १८ ॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः शूलाग्रकांतिनिवहेनदृशोसुराणां यन्नागताविलयमंशुमदिंदुखण्डयोग्याननंतवविलोकयतांतदेतत् ॥ १९ ॥ * *

खड्गप्रभाः खड्गप्रभाणां निकरः खड्गप्रभानिकरः खड्गप्रभानिकरस्य विस्फुरणाः तै खड्गप्रभानिकरवि-
स्फुरणैः प्रभाः कांतयः निकरः समूहः विस्फुरणाः सर्वत्रप्रसरणाः स्फुलिङ्गाः शूलस्य अग्रं शूलाग्रं
उग्रं च तत् शूलाग्रं च उग्रशूलाग्रं उग्रशूलाग्रस्य कांतयः उग्रशूलाग्रकांतयः उग्रशूलाग्रकांतीनां निव-
हः उग्रशूलाग्रकांतिनिवहः तेन उग्रशूलाग्रकांतिनिवहेन अग्रं अग्रभागः उग्रं भयानकं निवहः समूहः

विलयं नाशं नै आगताः न प्राप्ताः अंशवो विद्यन्ते यस्मिन् तत् अंशुमत् अंशवः कांतयः इन्दोः खण्डः इंदुखण्डः इंदुखण्डस्य योग्यं इंदुखण्डयोग्यं इंदुखण्डयोग्यं च तत् आननं च इंदुखण्डयोग्याननं तत् इन्दुखण्डयोग्याननं इन्दोः चन्द्रस्य खण्डः अर्द्धभागः योग्यं सदृशं आननं मुखारविंदं विलोकयतीति विलोकयन् तेषां विलोकयतां विलोकयन्ति पश्यन्ति चक्षुषा नेत्राणां आश्रयः आधारः ॥ १९ ॥

* *

दुर्वृत्तेति हे देवि तव शीलं दुर्वृत्तवृत्तशमनं भवति तथा अन्यैः अतुल्यं एतत् तव रूपं अविचि-

**दुर्वृत्तवृत्तशमनंतवदेविशीलं रूपंतथैतदविचिंत्यमतुल्यमन्यैः**
**वीर्यंचहंतृहृतदेवपराक्रमाणां वैरिष्वपिप्रकटितैवदयात्वयेत्थं**

न्त्यं भवति किञ्च तव वीर्यं हृतदेवपराक्रमाणां हंतृ भवति इत्थं त्वया दया एव वैरिषु अपि प्रकटिता शीलं स्वभाविकोगुणः दुष्टं वृत्तं येषां ते दुर्वृत्ताः दुर्वृत्तानां वृत्तं दुर्वृत्तवृत्तं दुर्वृत्तवृत्तस्य शमनं दुर्वृत्तवृत्तशमनं वृत्तं आचरणं दुर्वृत्तानां पापात्मनां वृत्तं पापं शमनं नाशः अतुल्यं असाधारणं रूपं आकृतिः विशेषेण चिन्तितुं योग्यं विचिन्त्यं न विचिन्त्यं अविचिन्त्यं वीर्यं पराक्रमः देवानां पराक्रमः देवपराक्रमः हृतः देवपराक्रमो यैः ते हृतदेवपराक्रमाः तेषां हृतदेवपराक्रमाणां हृतदेवपराक्रमाणां दैत्यानां हंतृनाशकं इत्थं अनेन प्रकारेण वैरिषु शत्रुषु दैत्येषु प्रकटिता प्रक-

टीकृता ॥ २० ॥ केनेति हे देवि वरदे ते अस्य पराक्रमस्य उपमा केन भवतु किञ्चतव रूपं कुत्र शत्रुभयकारि भवति कुत्र अतिहारि भवति अस्माभिः भुवनत्रये अपि एव चित्ते कृपा दृष्टा किञ्च समरनिष्ठुरता दृष्टा ते तव वरं ददातीति वरदा तत्सम्बोधने हे वरदे वरं वरदानं ते तव रूपं स्व-रूपं कुत्रापि शत्रूणां भयं शत्रुभयं शत्रुभयं करोतीति शत्रुभयकारि भयं त्रासः कुत्र कुत्रापि अति-हारि अतिमनोहरं भुवनानां त्रयं भुवनत्रयं तस्मिन्भुवनत्रये भुवनानां स्वर्गमर्त्यपातालानां त्रयं समूहः चित्ते अन्तःकरणे कृपा दया निष्ठुरस्य भावः निष्ठुरता समरेनिष्ठुरता समरनिष्ठुरता

**२० ॥ केनोपमाभवतुतेस्यपराक्रमस्य रूपंचशत्रुभयकार्यतिहा-**
**रिकुत्रचित्ते कृपासमरनिष्ठुरताचदृष्टा त्वय्येवदेविवरदेभुवन-**
**त्रयेपि ॥ २१ ॥ त्रैलोक्यमेतदखिलंरिपुनाशनेन त्रातंत्वयास-**

निष्ठुरस्य कठोरस्य भावः धर्मः समरे संग्रामे ॥ २१ ॥ * * *

त्रैलोक्यमिति हे देवि त्वया अखिलं एतत् त्रैलोक्यं रिपुनाशनेन त्रातं समरमूर्द्धनि तान् हत्वा ते रिपुगणाः अपि दिवं नीताः उन्मदसुरारिभवं अस्माकं भयं अपि अपास्तं अतः ते नमः अखिलं समस्तं त्रयो लोकाः त्रैलोक्यं रिपूणां नाशनं रिपुनाशनं तेन रिपुनाशनेन रिपूणां शत्रूणां दैत्यानां नाशनं नाशः त्रातं रचितं समरस्य मूर्द्धा समरमूर्द्धा तस्मिन् समरमूर्द्धनि समरस्य संग्रामस्य मूर्द्धा प्र-

ध्यानस्थानं यान् रिपुगणान् रिपूणां गणा रिपुगणाः रिपूणां शत्रूणां दैत्यानां गणाः समूहाः दिवं स्वर्गं नीताः प्रापिताः सुराणां अरयः सुरारयः उन्मदाश्च ते सुरारयश्च उन्मदसुरारयः उन्मदसुरारिभ्यः भवतीति उन्मदसुरारिभवं सुराणां देवानां अरयः शत्रवः दैत्याः उन्मदाः मदांधाः भयं त्रासः अपास्तं दूरी कृतं अतः अस्मात् कारणात् ते तुभ्यं नमः नमस्कारोऽस्तु ॥ २२ ॥ शूलेनेति हे देवि त्वं नः शूलेन पाहि नः अस्मान् शूलेन त्रिशूलेन पाहि रक्ष किञ्च हे अम्बिके त्वं नः खड्गेन पाहि नः अस्मान् खड्गेन असिना पाहि रक्ष किञ्च त्वं नः घण्टास्वनेन पाहि न अस्मान् घण्टायाः

**मरमूर्द्धनितेपिहत्वा नीता दिवंरिपुगणाभयमप्यपास्त मस्माक**
**मुन्मदसुरारिभवंनमस्ते ॥ २२ ॥ शूलेनपाहिनोदेविपाहिखड्गे**
**नचाम्बिके घण्टास्वनेननःपाहिचापज्यानिःस्वनेनच ॥ २३ ॥**

स्वनः घण्टास्वनः तेन घण्टास्वनेन स्वनः शब्दः पाहि रक्ष किञ्च त्वं नः चापज्यानिःस्वनेन पाहि नः अस्मान् चापस्य ज्या चापज्या चापज्यायाः निःस्वनः चापज्यानिःस्वनः तेन चापज्यानिःस्वनेन चापस्य धनुषः ज्याप्रत्यञ्चा निःस्वनः टङ्कारशब्दः ॥ २३ ॥ * * *

प्राच्यामिति हे देवि त्वं प्राच्यां स्थितान् नः रक्ष प्राच्यां पूर्वस्यां दिशि नः अस्मान् किञ्च हे चण्डिके त्वं प्रतीच्यां स्थितान् नः रक्ष प्रतीच्यां पश्चिमायां दिशि नः अस्मान् किञ्च त्वं दक्षिणे स्थि-

तान् नः रक्ष दक्षिणे दक्षिणदिग्भागे नः अस्मान् हे ईश्वरि तथा त्वं उत्तरस्यां स्थितान् नः आ-
त्मशूलस्य भ्रामणेन रक्ष उत्तरस्यां उदीच्यां दिशि नः अस्मान् आत्मनः शूलं आत्मशूलं तस्य आ-
त्मशूलस्य ॥ २४ ॥ सौम्यानीति हे देवि ते सौम्यानि यानि रूपाणि किञ्च अत्यर्थघोराणि यानि
रूपाणि त्रैलोक्ये विचरन्ति तैः त्वं अस्मान् तथा भुवं रक्ष ते तव सौम्यानि सृष्टिस्थितिव्यापारा-

प्राच्यांरक्षप्रतीच्यांचचण्डिकेरक्षदक्षिणे भ्रामणेनात्मशूलस्य-
उत्तरस्यांतथेश्वरि ॥ २४ ॥ सौम्यानियानिरूपाणित्रैलोक्येवि-
चरन्तिते यानिचात्यर्थघोराणितैरक्षास्मांस्तथाभुवं ॥ २५ ॥
खड्गशूलगदादीनियानिचास्त्राणितेम्बिके करपल्लवसंगीनि-
तैरस्मान्रक्षसर्वतः ॥ २६ ॥

* * *

णि यानि रूपाणि स्वरूपाणि अत्यर्थघोराणि संहारव्यापाराणि यानि रूपाणि स्वरूपाणि त्रयो लो-
काः त्रैलोक्यं तस्मिन् त्रैलोक्ये विचरन्ति गच्छन्ति तैः रूपैः भुवं पृथिवीं ॥ २५ ॥ खड्गेति हे अ-
म्बिके किञ्च करपल्लवसङ्गीनि खड्गशूलगदादीनि ते यानि अस्त्राणि भवन्ति तैः त्वं अस्मान् सर्वतः
रक्ष करा एव पल्लवाः करपल्लवाः करपल्लवानां सङ्गः करपल्लवसङ्गः करपल्लवसङ्गोऽस्ति येषां तानि

करपल्लवसङ्गीन करा एव अष्टादशभुजा एवपल्लवा: किशलयानि पत्राणि सङ्ग: संसर्ग: सम्बन्ध: खड्गश्च शूलं च गदाच ता: खड्गशूलगदा: खड्गशूलगदाचादिर्येषां तानि खड्गशूलगदादीनि खड्ग: असि: ते तव शूलं त्रिशूलं तै: अस्त्रै: सर्वत: सर्वंच ॥ २६ ॥ * * * *

ऋषिरुवाच, एवमिति हे राजन् त्रिदशै: समस्तै: सुरै: तु एव स्तुता जगतां धात्री प्रसादसुमुखी सती प्रणतान् समस्तान् सुरान् प्राह कथं भूता जगतां धात्री भक्त्या दिव्यै: नन्दनोद्भवै: कुसुमै: तथा गन्धानुलेपनै: अर्चिता पुन: कथं भूता जगतां धात्री दिव्यै: धूपै: धूपिता: तिस्र: दशा: येषां ते

**ऋषिरुवाच, एवंस्तुतासुरैर्दिव्यै:कुसुमैर्नन्दनोद्भवै: अर्चिताजगतांधात्रीतथागन्धानुलेपनै: ॥ २७ ॥ भक्त्यासमस्तैस्त्रिदशैर्दिव्यैर्धूपैस्तुधूपिता प्राहप्रसादसुमुखीसमस्तान्प्रणतान्सुरा-**

त्रिदशा: तै: त्रिदशै: दशा: अवस्था: समस्तै: संपूर्णै: सुरैर्देवै: एवं पूर्वोक्तप्रकारेण जगतां चतुर्दशलोकानांधात्री जननी देवी सुष्टुमुखं यस्या: सा सुमुखी प्रसादेन सुमुखी प्रसादसुमुखी सुष्टु शोभनं आननं प्रसादेन प्रसन्नतया प्रणतान् कृतनमस्कारान् समस्तान् संपूर्णान् सुरान् देवान् प्राह उवाच दिवि भवानि दिव्यानि तै: दिव्यै: दिवि स्वर्गे भवानि उत्पन्नानि दिव्यै: उत्कृष्टै: नन्दनात् उद्भवो येषां तानि नन्दनोद्भवानि तै: नन्दनोद्भवै: नन्दनात् देवोद्यानात् उद्भव: प्रादुर्भाव: कुसुमै: पुष्पै:

गन्धाश्च अनुलेपनानि च तानि गन्धानुलेपनानि तैः गन्धानुलेपनैः गन्धाः श्रीरागादयः अनुलेपना-
नि श्रीचन्दनादीनि अर्चिता पूजिता दिव्यैः मनोज्ञैः ॥ २७ । २८ ॥ देव्युवाच, व्रियतामिति
देवा ऊचुः भगवत्येति हे सर्वे त्रिदशाः भवतां अस्मत्तः यत् अभिवाञ्छितं भवति तत् भवद्भिः
व्रियतां अभिवांछितं इच्छितः व्रियतां याच्यतां देवा ऊचुः हे देवि भगवत्या अस्माकं शत्रुः अयं
महिषासुरः यत् निहतः तत् सर्वं कृतं किञ्चित् न अवशिष्यते भगवत्या त्वया शत्रुः वैरी निहतः
प्रहारितः न अवशिष्यते न अवशिष्टो भवति ॥ २९ ॥ * * * * *

न्, २८ देव्युवाच, व्रियतांत्रिदशाःसर्वैर्यदस्मत्तोभिवांछितं, दे-
वाऊचुः, भगवत्याकृतंसर्वंनकिञ्चदवशिष्यते ॥ २९ ॥ यदयंनिह
तःशत्रुरस्माकंमहिषासुरःयदिचापिवरोदेयस्त्वयास्माकंमहेश्व-

यदिति हे महेश्वरि यदि चापि त्वया अस्माकं वरः देयः तर्हि त्वं संस्मृता सती नः परमापद
हिंसेथाः यदिचापि यद्येवं सत्यपि अस्माकं अस्मभ्यं ततः अस्माकं परमाश्च ताः आपदश्च परमापदः
परमाः उत्कृष्टाः आपदः आपत्तयः हिंसेथाः नाशय ॥ ३० ॥ उत्तरार्द्धमुत्तरान्वयि य इति हे अम-
लानने हे अम्बिके यः मर्त्यः त्वां एभिः स्तवैः स्तोष्यति तस्य त्वं वित्तर्द्धिविभवैः सह धनदारादिस-
स्पृहां किञ्च [illegible] हृदये सर्वप्रसन्नाभवेथाः अमलं आननं यस्याः सा अमलानना तत्सम्बोधने हे

अमलानने ! अमलं प्रहृष्टं आननं मुखारविन्दं तस्य मर्त्यस्य मनुष्यस्य वित्तस्य ऋद्धिः वित्तर्द्धिः वित्तर्द्धेः विभवाः वित्तर्द्धिविभवाः तैः वित्तर्द्धिविभवैः वित्तस्य ज्ञानस्य ऋद्धिः उपचयः विभवाः ऐश्वर्यादयः धनानि च दाराश्च धनदाराः धनदाराः आदिर्येषां ते धनदारादयः धनदारादीनां सम्पदः धनदारादिसम्पदः तासां धनदारादिसम्पदाम् धनानि द्रव्याणि दाराः कलत्राणि सम्पदः अनुरूपात्मभाव अस्म-

रि ॥ ३० ॥ संस्तुतासंस्तुताभिर्नोहिंसेथाःपरमापदः यश्चमर्त्यः स्तवैरेभिस्त्वांस्तोष्यत्यमलानने ॥ ३१ ॥ तस्यवित्तर्द्धिविभवैर्धन दारादिसम्पदां वृद्धयेऽस्मत्प्रसन्नात्वं भवेथाःसर्वदाम्बिके ॥ ३२ ॥ ऋषिरुवाच, इतिप्रसादितादेवैर्जगतोऽर्थेतथात्मनः तथेत्युक्त्वाभ द्रकालीवभूवांतर्हितानृप ॥ ३३ ॥ * * * *

त् अस्माकं वृद्धये उपचयाय सर्वदा भवेथाः भव ॥ ३२ ॥ ऋषिरुवाच इतीति हे नृप हे राजन् देवैः जगतः तथा आत्मनः अर्थे इति प्रसादिता भद्रकाली तथा इति उक्त्वा अन्तर्हिता बभूव नॄन् पातीति नृपः तत्सम्बोधने हे नृप नॄन् जनान् पाति रक्षति देवैः इन्द्रादिभिः इति पूर्वोक्तप्रकारेण प्रसादिता प्रसन्नीकृता भद्रं कालयतीति भद्रकाली भद्रं कल्याणं कालयति वर्द्धयति तथा तथास्तु

अन्तर्हिता अदृश्या ॥ ३३ ॥ * * * * * * *

इतीति हे भूप हे राजन् पुराजगत्त्रयहितैषिणी सा देवी देवशरीरेभ्यः यथा संभूता बभूव तथा
मया ते इति एतत् कथितं भुवं पातीति भूपः तत्सम्बोधने हे भूप भुवं पृथिवीं पाति रक्षति जग-
तां त्रयं जगत्त्रयं जगत्त्रयस्य हितैषिणी जगत्त्रयहितैषिणी जगतां स्वर्गमर्त्यपातालानां हितैषिणी
हितकर्त्री देवानां शरीराणि देवशरीराणि तेभ्यः देवशरीरेभ्यः देवानां इन्द्रादीनां शरीराणि देहाः
यथा येनप्रकारेण संभूता प्रकटीभूता तथा तेन प्रकारेण ते तुभ्यं ॥ ३४ ॥ पुनश्चेति हे राजन्

**इत्येतत्कथितंभूपसंभूतासायथापुरा देवीदेवशरीरेभ्योजगत्त्र-
यहितैषिणी ॥ ३४ ॥ पुनश्चगौरीदेहासासमुद्भूतायथाभवत्
वधायदुष्टदैत्यानांतथाशुम्भनिशुम्भयोः ॥ ३५ रक्षणायचलोका-**

पुनश्च देवानां उपकारिणी गौरीदेहा सा दुष्टदैत्यानां तथा शुम्भनिशुम्भयोः वधाय किञ्च लोकानां
रक्षणाय यथा संमुद्भूता अभवत् तथा मयाऽख्यातं तत् त्वं शृणुष्व अहं तथावत् ते कथयामि
देवानां इन्द्रादीनां उपकारिणी उपकारकर्त्री गौर्याः देहः गौरीदेहः गौरीदेहः कारणं यस्याः सा
गौरीदेहा गौर्याः पार्वत्याः देहः शरीरं कारणं हेतुः दुष्टाश्च ते दैत्याश्च दुष्टदैत्याः तेषां दुष्टदैत्यानां दुष्टाः
कुटिलाः शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुभयोः लोकनां जनानाम् सा देवी यथा

राजन् म...

येन प्रकारेण ...भूता प्रकटीभूता तथा तेन प्रकारेण मया मत्तः ख्यातं लोकप्रसिद्धं तत् त्वं प्रकारं
यथावत् यथार्थं ते तुभ्यं कथयामि कथयिष्ये वर्तमानसामीप्ये वर्तमानवद्वा इत्यनेन सूत्रेण भूते
लृट् ॥ ३५ । ३६ ॥ इति श्रीनागोजीभट्टसम्मतकृते सप्तशतीव्याख्याने शक्रादिस्तुतिर्नामचतुर्थो-
ऽध्यायः ॥ ४ ॥ * * * * * * * * * * *

यथावत्कथयामीति प्रतिज्ञातमितिहासमाह, ऋषिरुवाच, पुरेति हे राजन् पुरा असुराभ्यां

**नां देवानामुपकारिणी तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते ॥**
**३६ ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये**
**शक्रादिस्तुतिः समाप्तः चतुर्थोऽध्यायः ॥ ४ ॥ ऋषिरुवाच,**
**पुरा शुम्भनिशुम्भाभ्यामसुराभ्यां शचीपतेः त्रैलोक्यं यज्ञभागाश्च-**

शुम्भनिशुम्भाभ्यां मदबलाश्रयात् शचीपतेः त्रैलोक्यं हृतं किञ्च यज्ञभागाः हृताः पुरा पूर्वं असु-
राभ्यां दनुजाभ्यां शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ ताभ्यां शुम्भनिशुम्भाभ्यां मदश्च बलं च ते
मदबले मदबलयोः आश्रयः मदबलाश्रयः तस्मात् मदबलाश्रयात् मदः गर्वः बलं शक्तिः आश्रयः
आधारः शच्याः पतिः शचीपतिः तस्य शचीपतेः शच्याः इन्द्राण्याः पतिः स्वामी इन्द्रः त्रयोलोकाः

त्रैलोक्यं लोकाः स्वर्गमर्त्यपातालानि हृतं स्वाधीनं कृतं यज्ञे भागाः यज्ञभागाः हृताः स्वाधीनी
कृताः ॥ १ ॥ तावेवेति हे राजन् तौ एव सूर्यतां तद्वत् ऐन्दवं अधिकारं तथा कौबेरं अधिकारं
अथ च याम्यं अधिकारं किञ्च वरुणस्य अधिकारं चक्राते तौ एव शुम्भनिशुम्भौ एव सुवतीति सूर्यः
सूर्यस्य भावः सूर्यता तां सूर्यतां सुवति कर्मणि लोकं प्रेरयति भावः धर्मः सूर्यतां सर्वलोककर्म-
प्रेरकतां अधिकारं तद्वत् तथैव ऐन्दवं इन्दोः अयं ऐन्दवः तं ऐन्दवं इन्दोः चन्द्रस्य कुबेरस्य अयं
कौबेरं यमस्य अयं याम्यः तं याम्यं ॥ २ ॥ तावेवेति हे राजन् तौ एवं किञ्च पवनर्द्धिं किञ्च वह्नि-

**हृतामदबलाश्रयात् ॥ १ ॥ तावेवसूर्यतांतद्वदधिकारंतथैन्दवं**
**कौबेरमथयाम्यंचचक्रातेवरुणस्यच २ ॥ तावेवपवनर्द्धिंचचक्र**
**तुर्वह्निकर्मच ततोदेवाविनिर्धूताभ्रष्टराज्याःपराजिताः ॥ ३ ॥**

कर्म चक्रतुः तौ एव शुम्भनिशुम्भौ एव पवनः ऋध्यते अनेनेति पवनर्द्धिः तं पवनर्द्धिं पवनः वायुः
ऋध्यते वर्द्धते पवनर्द्धिं पवनाधिकारं वन्हेः कर्म वन्हिकर्म तत् वन्हिकर्म अग्न्यधिकारं ततः विनि-
र्धूताः देवाः पराजिताः सन्तः भ्रष्टराज्याः जाता इत्यर्थः ततः तदनन्तरं स्वस्वाधिकारगतानन्तरं
विनिर्धूताः कम्पिताः देवा इन्द्रादयः परै आजिताः पराजिताः परैः शत्रुभिः आ सर्वतः ॥ ३ ॥
हृतेति हे राजन् महासुराभ्यां ताभ्यां निराकृताः सर्वे त्रिदशाः हृताधिकाराः सन्तः अपराजितां

तां देवीं संस्मरन्ति महांतौ च तौ असुरौ च महासुरौ ताभ्यां महासुराभ्यां महांतौ बलवन्तौ असु-
रौ दैत्यौ ताभ्यां शुम्भनिशुम्भाभ्यां निराकृताः स्वर्गात् निःसारिताः सर्वे समस्ताः तिस्रः दशाः ये-
षां ते त्रिदशाः दशाः अवस्थाः त्रिदशाः देवाः हृतः अधिकारो येषां ते हृताधिकाराः हृतः गतः
अधिकारः सर्वाधिकारः अपरैः अजिता अपराजिता तां अपराजितां अपरैः शत्रुभिः संस्मरंति
स्मृतवन्तः वर्तमानसामीप्ये भूतेलट् ॥ ४ ॥ तत्र हेतुमाह तयेति तया अस्माकं इति यथा वरः

हृताधिकारास्त्रिदशास्ताभ्यांसर्वैनिराकृताः महासुराभ्यांतां-
देवींसंस्मरंत्यपराजितां ॥ ४ ॥ तयास्माकंवरोदत्तोयथापत्सु-
स्मृताखिलाः भवतांनाशयिष्यामितत्क्षणात्परमापदः ॥ ५ ॥
इतिकृत्वामतिंदेवाहिमवंतंनगेश्वरं जग्मुस्तत्रततोदेवींविष्णु-

दत्तः इतीति किं हे त्रिदशाः भवद्भिः अहं आपत्सु स्मृता सती तत्क्षणात् भवतां अखिलाः पर-
मापदः नाशयिष्यामि तया देव्या यथा यथार्थः इतीति किं अखिलाः समस्ताः परमाश्च ताः आ-
पदश्च परमापदः परमाः उत्कृष्टाः आपत्तयः ॥ ५ ॥ इतीति देवाः इति मतिं कृत्वा नगेश्वरं हि-
मवन्तं जग्मुः तत्र विष्णुमायां देवीं प्रतुष्टुवुः देवाः इन्द्रादयः मतिं बुद्धिं नगानां ईश्वरः नगेश्वरः

तं नगेश्वरं नगानां पर्वतानां ईश्वरः स्वामी हिमवन्तं हिमाचलं ततः तदनन्तरं हिमवत्गमना-
नन्तरं तत्र हिमवति विष्णोः माया विष्णुमाया तां विष्णुमायां विष्णोः हरेः माया शक्तिः ॥ ६ ॥
प्रशब्दद्योतितां सर्वात्मना स्तुतिमाह देवा ऊचुः नम इति देव्यै सततं नमः महादेव्यै सततं नमः
शिवायै सततं नमः प्रकृत्यै सततं नमः भद्रायै सततं नमः वयं नियताः सन्तः तां प्रणताः स्म दे-
व्यै द्युत्यादिमत्यै सततं निरन्तरं नमः नमस्कारोऽस्तु महा देव्यै ब्रह्मादिदेवसर्गादिव्यवहारः प्रवर्तत
देव्यै शिवायै मुक्तिरूपायै प्रकृत्यै सृष्टिशक्तौ भद्रायै सवाशक्तौ नियताः समाहितचित्ताः स्म इति

मायांप्रतुष्टुवुः ॥ ६ ॥ देवाऊचुःनमोदेव्यैमहादेव्यैशिवायैस

ततंनमः नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतां ॥ ७ ॥

रौद्रायैनमोनित्यायैगौर्यैधात्र्यैनमोनमः ज्योत्स्नायैचेंदुरूपि-

पादपूरणे ॥ ७ ॥
रौद्रायै इति रौद्रायै नमः नित्यायैः नमः गौर्यै नमः धात्र्यै नमः किञ्च इन्दुरूपिण्यै ज्योत्स्नायै
नमः सुखायै सततं नमः नमः सर्वजनबोध्यं रौद्रायै संहारशक्तौ नित्यायै कालानवच्छिन्नायै यद्वा
नित्याख्यशक्तिरूपायै गौर्यै गौरवर्णायै धात्र्यै जगदाधारायै ज्योत्स्नायै चन्द्रकिरणायै सुखायै पर-
मानन्दरूपायै ॥ ८ ॥ कल्याणीति कल्याण्यै नमः वृद्ध्यै नमः सिध्यै नमः वयं प्रणताः सन्तः ताभ्यः

नमः नमः कुमः कल्याण्यै कल्याणकर्त्र्यै वृद्ध्यै उपचयरूपायै सिद्ध्यै अणिमाद्यष्टविधरूपायै प्रणताः नम्राः नैरृत्यै नमः भूभृतां लक्ष्म्यै नमः शर्वाण्यै ते नमः नैरृत्यै राक्षसलक्ष्म्यै यद्वा नैरृत्यै रक्षःशक्त्यै भूभृतां राज्ञां शर्वाण्यै शिवशक्त्यै ते तुभ्यं ॥ ९ ॥ दुर्गायै इति दुर्गायै नमः दुर्गपारायै नमः सारायै नमः सर्वकारिण्यै नमः तथैव ख्यात्यै नमः कृष्णायै नमः धूम्रायै नमः सततं नमः दुर्गायै दुःखक्षयायै दुर्गः पारो यस्याः सा दुर्गपारा तस्यै दुर्गपारायै दुर्गः दुरधिगमः पारः परिच्छेदः यद्वा दु-

ण्यैसुखायैसततंनमः ॥ ८ ॥ कल्याण्यैप्रणतावृद्ध्यै सिद्ध्यै कुर्मो-

नमोनमः नैरृत्यै भूभृतांलक्ष्म्यै शर्वाण्यैतेनमोनमः ॥ ९ ॥

दुर्गायैदुर्गपारायैसारायैसर्वकारिण्यै ख्यात्यै तथैवकृष्णायैधूम्रा

यैसततंनमः ॥ १० ॥ * * *

र्गात् पारं करोतीति दुर्गपारा तस्यै दुर्गपारायै दुर्गात् संसारात् सारायै बलवत्यै सर्वकारिण्यै सर्वजननि स्वतन्त्रायै ख्यात्यै प्रकृतिपुरुषभेदज्ञानरूपायै यद्वा ख्यात्यै प्रसिद्ध्यै कृष्णायै कृष्णवर्णायै यद्वा कृष्णशक्त्यै धूम्रायै धूम्रवर्णायै यद्वा धूमावत्यै शक्त्यै ॥ १० ॥ * *

अतीति वयं नताः सन्तः अतिसौम्यातिरौद्रायै तस्यै नमः नमः कुर्मः नताः यद्वा अतिसौम्याचा-

ता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः बुद्धिरूपेण सविकल्पकज्ञानरूपेण ॥ १४ ॥ येति या देवी सर्वभूतेषु निद्रारूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः निद्रारूपेण सुषुप्त्यवस्थारूपेण यद्वा स्वप्नावस्थारूपेण ॥ १५ ॥ येति या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः क्षुधारूपेण अभ्यवजिहीर्षारूपेण १६

बुद्धिरूपेणसंस्थितानमस्तस्यैनमस्तस्यै० ॥ १४ ॥ यादेवीसर्वभू-तेषुनिद्रारूपेण संस्थितानमस्तस्यैनमस्तस्यै० ॥ १५ ॥ यादेवी-सर्वभूतेषुक्षुधारूपेणसंस्थिता नमस्तस्यैनमस्तस्यैनमस्तस्यै-नमोनमः ॥ १६ ॥ यादेवीसर्वभूतेषुच्छायारूपेण संस्थितानम-स्तस्यैनमस्तस्यै० ॥ १७ ॥

* * * * *

येति या देवी सर्वभूतेषु छायारूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः छायारूपेण संस्थिता संसारातपाभावरूपेण यद्वा वर्णप्रमादरूपेण ॥ १७ ॥ येति या देवी सर्वभूते-षु शक्तिरूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः शक्तिरूपेण कार्यज-ननसामर्थ्यरूपेण ॥ १८ ॥ येति या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता भवति तस्यै नमः तस्यै

नमः तस्यै नमः नमः नमः तृष्णारूपेण अनात्मीयस्वीकारेच्छारूपेण ॥ १९ ॥ येति या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः क्षान्तिरूपेण सामर्थ्ये सत्यपि अपकारिणि अपकाराचिकीर्षारूपेण ॥ २० ॥ येति या देवी सर्वभूतेषु जातिरूपेण

यादेवीसर्वभूतेषुभ्रान्तिरूपेण संस्थितानमस्तस्यै नमस्तस्यै०१८।
यादेवीसर्वभूतेषुतृष्णारूपेण संस्थितानमस्तस्यै नमस्तस्यै० १९।
यादेवीसर्वभूतेषुक्षान्तिरूपेण संस्थितानमस्तस्यै नमस्तस्यै० ॥
२० ॥ यादेवीसर्वभूतेषुजातिरूपेण संस्थितानमस्तस्यै नमस्तस्यै० ॥ २१ ॥ यादेवीसर्वभूतेषुलज्जारूपेण संस्थितानमस्तस्यै नमस्तस्यै० ॥ २२ ॥ यादेवीसर्वभूतेषुशान्तिरूपेणसंस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २३ ॥

संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः जातिरूपेण गोत्वादिरूपेण ॥ २१ येति या देवी सर्वभूतेषु लज्जारूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः लज्जारूपेण स्वकार्यविषयाऽन्यज्ञानमयरूपेण ॥ २२ ॥ येति या देवी सर्वभूतेषु शान्तिरूपेण संस्थि-

ता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः शांतिरूपेण इन्द्रियसंयमविषयोपरति-
रूपेण ॥ २३ ॥ * * *

येति या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः
श्रद्धारूपेण श्रुत्यायुक्तेर्थेआस्तिक्यरूपेण ॥ २४ ॥ येति या देवी सर्वभूतेषु कांतिरूपेण संस्थिता भ-

**यादेवीसर्वभूतेषुश्रद्धारूपेण संस्थितानमस्तस्यै नमस्तस्यै० ॥ २४ ॥ यादेवीसर्वभूतेषुकांतिरूपेण संस्थितानमस्तस्यै नमस्तस्यै० ॥ २५ ॥ यादेवीसर्वभूतेषुलक्ष्मीरूपेण संस्थितानमस्तस्यै-नमस्तस्यै० ॥ २६ ॥ यादेवीसर्वभूतेषुवृत्तिरूपेण संस्थितानम-स्तस्यै नमस्तस्यै० ॥ २७ ॥ यादेवीसर्वभूतेषुस्मृतिरूपेणसंस्थिता**

वति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः कांतिरूपेण शोभारूपेण ॥ २५ ॥ येति या दे-
वी सर्वभतेषु लक्ष्मीरूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः लक्ष्मी-
रूपेण धनादिसम्पत्रूपेण यद्वा मोक्षप्राप्तिरूपेण ॥ २६ ॥ येति या देवी सर्वभतेषु वृत्तिरूपेण सं-
स्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः वृत्तिरूपेण जीविकारूपेण यद्वा प्रवृत्तिरू-

पेण ॥ २७ ॥ येति या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै
नमः नमः नमः स्मृतिरूपेण अनुभूतविषयज्ञानरूपेण ॥ २८ ॥ येति या देवी सर्वभूतेषु दयारूपेण
संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः दयारूपेण परदुःखप्रहारेच्छारूपे-
ण ॥ २९ ॥ येति या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः

नमस्तस्यै नमस्तस्यै० ॥ २८ ॥ यादेवीसर्वभूतेषुदयारूपेण सं-
स्थितानमस्तस्यै नमस्तस्यै० ॥ २९ ॥ यादेवीसर्वभूतेषुतुष्टिरूपे-
णसंस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ ३० ॥
यादेवीसर्वभूतेषुमातृरूपेण संस्थितानमस्तस्यैनमस्तस्यै० ३१ ॥
यादेवीसर्वभूतेषुभ्रांतिरूपेण संस्थितानमस्तस्यैनमस्तस्यै० ३२ ॥

नमः नमः तुष्टिरूपेण अधिगताधिकानभिलाषारूपेण ॥ ३० ॥ * * * *
येति या देवी सर्वभूतेषु मातृरूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः
मातृरूपेण पालयित्रीरूपेण यद्वा मातृकाधिष्ठात्रीदेवतारूपेण ॥ ३१ ॥ या देवी सर्वभूतेषु भ्रांति-
रूपेण संस्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः भ्रांतिरूपेण अतद्वतितद्बुद्ध्य-

यद्रूपेण ॥ ३२ ॥ इन्द्रियेति या अखिलेषु भूतेषु अन्तर्यामितया स्थिता भवति इन्द्रियाणां किञ्च भूतानां अधिष्ठात्री भवति तस्यै व्याप्तिदेव्यै सततं नमः अखिलेषु समस्तेषु भूतेषु जनेषु इन्द्रिया-णां ज्ञानकारणानां भूतानां ज्ञानविषयाणां सूक्ष्मस्थूलानां अधिष्ठात्री प्रवर्तिका निवर्तिका च व्याप्ति-दिव्यै व्याप्तियुक्तदेव्यै व्यापिकायै इत्यर्थः ॥ ३३ ॥ चितिरूपेति या चितिरूपेण कृत्स्नं एतत् जग-त् व्याप्य स्थिता भवति तस्यै नमः तस्यै नमः तस्यै नमः नमः नमः चितिः चपनं बुद्धिः तद्रूपेण। ३४ ॥ नम इत्यनेन नमो नमः मन्त्रस्वरूपत्वं इदमुपलक्षणं सर्वमन्त्रस्वरूपत्वस्येति कश्चित् अत्रायं

इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या भूतेषु सततं तस्यै व्या-प्तिदेव्यै नमो नमः ॥ ३३ ॥ चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थि-ता जगत् नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३४ ॥ *

संग्रहः विष्णुमाया चेतना च बुद्धिर्निद्रा क्षुधा तथा छाया शक्तिस्तृष्णा च क्षान्तिर्जातिस्ततः परं ॥ १ ॥ ल-ज्जा शांतिस्ततः श्रद्धा कांतिर्लक्ष्मीस्ततः परा वृत्तिः स्मृतिर्दया चैव तुष्टिर्माता ततः परं ॥ २ ॥ भ्रांतिर्व्या-प्तिश्चितिश्च वचर्यो विंशतिसंख्यका: इतोधिकमनार्षं स्यात्तच्चैकात्यायनेस्फुटं ॥ ३ ॥ * *

स्तुतेति सुरैः पूर्वं स्तुता तथा सुरेंद्रेण अभीष्टसंश्रयात् दिनेषु सेविता शुभहेतुः सा ईश्वरी नः शुभानि भद्राणि करोतु किञ्च आपदः अभिहन्तु सुरैः ब्रह्मादिभिः सुराणां इन्द्रः सुरेन्द्रः तेन सुरे-

द्रेण सुराणां देवानां इन्द्रः श्रेष्ठः अभीष्टस्य संश्रयः अभीष्टसंश्रयः तस्मात् अभीष्टसंश्रयात् संश्रयः प्राप्तिः
दिनेषु प्रतिदिनं सेविता आराधिता शुभस्य हेतुः शुभहेतुः कारणं ईश्वरी देवी नः अस्माकं शु-
भानि भद्राणि अतिशयिता शुभानि आपदः आपत्तिः अभिहन्तु नाशयतु ॥ ३५ ॥ येति उद्धतदै-
त्यतापितैः सुरैः अस्माभिः सांप्रतं या ईशा नमस्यते किञ्च भक्तिविनम्रमूर्तिभिः अस्माभिः या च
[illegible]ती तत्क्षण एव नः सर्वापदः हन्ति उद्धताश्च ते दैत्याश्च उद्धतदैत्याः उद्धतदैत्यैः तापिताः

**स्तुतासुरैःपूर्वमभीष्टसंश्रयात्तथासुरेन्द्रेणदिनेषुसेविता करोतु**
**सानःशुभहेतुरीश्वरीशुभानिभद्राण्यभिहन्तुचापदः ॥ ३५ ॥**
**यासांप्रतंचोद्धतदैत्यतापितैरस्माभिरीशाचसुरैर्नमस्यते याच**
**स्मृतातत्क्षणमेवहन्तिनःसर्वापदोभक्तिविनम्रमूर्त्तिभिः ॥ ३६**

उद्धतदैत्यतापिताः तैः उद्धतदैत्यतापितैः उद्धताः मदांधाः दैत्याः असुराः तापिताः पीडिताः सुरै-
र्देवैः सांप्रतं वर्त्तमानकाले ईशा देवी भक्त्या विनम्रा मूर्तिर्येषां ते भक्तिविनम्रमूर्त्तयः तैः भक्तिवि-
नम्रमूर्तिभिः नम्रा नम्रीभूता मूर्तिः तनुः या देवी सर्वाश्च ताः आपदश्च सर्वापदः सर्वाः समस्ताः
आपदः आ[illegible]यः हन्ति नाशयति ॥ ३६ ॥ ऋषिरुवाच, एवमिति हे राजन् हे नृपनन्दन तत्र पा-

र्वती जाह्नव्याः तोये स्नातुं एवं स्तवादियुक्तानां देवानां अभि आययौ तत्र देवसन्निहिते देशे जा-
ह्नव्याः गङ्गायाः तोये जले स्नातुं स्नातुमिव एवं अनेन प्रकारेण स्तवादिभिः युक्ताः स्तवादियुक्ताः
तेषां स्तवादियुक्तानां स्तोत्रस्तवनयुक्तानां देवानां इन्द्रादीनां अभिसन्मुखं ॥ ३७ ॥ * *
सेति हे राजन् सा सुभ्रूः तान् सुरान् इति अब्रवीत् इतीति किं हे सुराः भवद्भिः अत्र का स्तू-
यते किञ्च अस्याः शरीरकोशतः समुद्भूता शिवा अब्रवीत् शोभने भ्रुवौ यस्याः सा सुभ्रूः शोभने

ऋषिरुवाच, एवंस्तवादियुक्तानांदेवानांतत्रपार्वती स्नातुमभ्या
ययौतोयेजाह्नव्यान्नृपनन्दन ॥ ३७ ॥ साब्रवीत्तान्सुरान्सुभ्रू-
र्भवद्भिःस्तूयतेचका शरीरकोशतश्चास्याःसमुद्भूताब्रवीच्छिवा ॥
३८ ॥ स्तोत्रंममैतत्क्रियतेशुम्भदैत्यनिराकृतैः देवैःसमेतैःसम-

मनोहरे सुभ्रूः देवी तान् प्रसिद्धान् सुरान् इन्द्रादीन् अत्र अस्मिन् स्थले आत्म पार्वत्याः शरीर
एव कोशः शरीरकोशः शरीरकोशादिति शरीरकोशतः शरीर एव देह एव कोशः गृहं समुद्भूता
सत्वप्रधानांशेन प्रादुर्भूता शिवा देवी ॥ ३८ ॥ किमब्रवीत्तदाह स्तोत्रमिति समेतैः समरे निशुम्भेन
पराजितैः शुम्भदैत्यनिराकृतैः देवैः मम एतत् स्तोत्रं क्रियते समेतैः मिलितैः समरे रणे शुम्भदैत्येन

निराकृता: शुम्भदैत्यनिराकृता: तै: शुम्भदैत्यनिराकृतै: निराकृता: स्वर्गात् नि:सारिता: देवै: इ-
न्द्रादिभि: स्तोत्रं स्तुति: ॥ ३९ ॥ शरीरेति अम्बिका तस्या: पार्वत्या: शरीरकोशात् यत् नि:सृता
तत: जनै: समस्तेषु लोकेषु कौशिकी इति गीयते अम्बिका देवी शरीर एव कोश: शरीरकोश:
तस्मात् शरीरकोशात् शरीर एव देह एव कोश: गृहं तत: तत् कौशिकी कोशात् जाता कौशिकी
गीयते कथ्यते ॥ ४० ॥ तस्यामिति तस्यां तु विनिर्गता पार्वती अपि कृष्णा अभूत् जनैर्हिमाचल

र्दैर्निशुम्भेनपराजितै: ॥ ३९ ॥ शरीरकोशाद्यत्तस्या:पार्वत्या-

नि:सृतांबिका कौशिकीतिसमस्तेषुततोलोकेषुगीयते ॥ ४० ॥

तस्यांविनिर्गतायांतुकृष्णाभूत्सापिपार्वती कालिकेतिसमाख्या-

ताहिमाचलकृताश्रया ॥ ४१ ॥ * * * *

कृताश्रया अम्बिका कालिका इति समाख्याता तस्यां अम्बिकायां विनिर्गतायां नि:सृतायां कृष्णा
कृष्णवर्णा हिमाचले कृत: आश्रयो यया हिमाचलकृताश्रया आश्रय: स्थानं समाख्याता
कथिता ॥ ४१ ॥ * *
तत इति तत: शुम्भनिशुम्भयो: भृत्यौ चण्ड: किञ्च मुण्ड: सुमनोहरं परं रूपं बिभ्राणां अम्बि-

कां ददर्श ततः तदनन्तरं हिमाचलकृताश्रयानन्तरं शुम्भस्य निशुम्भस्य तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः भृत्यौ सेवकौ सुमनोहरं अतिरमणीयं परं उत्कटं रूपं स्वरूपं बिभ्राणां धारयन्तीं अम्बिकां देवीं ॥ ४२ ॥ ताभ्यामिति किञ्च ताभ्यां शुम्भाय इति आख्याता इतीति किं हे महाराज हिमाचलं भासयन्ती अतीव सुमनोहरा कापि स्त्री आस्ते ताभ्यां चण्डमुण्डाभ्यां आख्याता कथिता भासयन्ती प्रकाशयन्ती अतीव अत्यन्तमेव सुमनोहरा रमणीया कापि अनिर्वाच्या ॥ ४३ ॥

ततोऽम्बिकां परं रूपं बिभ्राणां सुमनोहरम् ।
ददर्श चण्डो मुण्डश्च भृत्यौ शुम्भनिशुम्भयोः ॥ ४२ ॥
ताभ्यां शुम्भाय चाख्याता अतीव सुमनोहरा ।
काप्यास्ते स्त्री महाराज भासयन्ती हिमाचलम् ॥ ४३ ॥
नैव तादृक् क्वचिद्रूपं दृष्टं केनचिदुत्तमम् ।
ज्ञायतां काप्यसौ देवी गृह्य-

नैवेति हे असुरेश्वर केनचित् उत्तमं तादृक् रूपं नैव दृष्टं अतः त्वया असौ देवी अपि का भवति इति ज्ञायतां किञ्च गृह्यतां असुराणां ईश्वरः असुरेश्वरः तत्सम्बोधने हे असुरेश्वर असुराणां दैत्यानां ईश्वरः स्वामी उत्तमं श्रेष्ठं रूपं स्वरूपं अतः अस्मात् कारणात् ज्ञायतां दूतद्वारा तत्स्वरूपं विचार्यतां गृह्यताम् अङ्गीक्रियताम् ॥ ४४ ॥ ननु किमर्थोऽङ्गीकारस्तस्या इत्यत आह स्त्रीरत्नमिति हे

असुरेश्वर तत्र अतिचार्वंगी त्विषा दिशः द्योतयन्ती सा स्त्रीरत्नं तु तिष्ठति हे दैत्येन्द्र भवान् तां द्रष्टुं
अर्हति तत्र तस्मिन् हिमाद्रौ अतिचारु अङ्गं यस्याः सा अतिचार्वंगी अतिचारु अतिमनोहरं अङ्गं
शरीरं त्विषा दीप्त्या द्योतयन्ती प्रकाशयन्ती स्त्रीरत्नं उत्तमस्त्रीत्यर्थः दैत्यानां इन्द्रः दैत्येन्द्रः तत्स-
म्बोधने हे दैत्येन्द्र इन्द्रः स्वामी तां स्त्रियं अर्हति योग्यो भवति ॥ ४५ ॥ * * *
ननु यदि सा रत्नभूता कथमस्माकं स्यादत आह यानीति हे प्रभो त्रैलोक्ये तु समस्तः गजाश्वा-

तांचासुरेश्वर ॥ ४४ ॥ स्त्रीरत्नमतिचार्वंगीद्योतयन्तीदिश-
स्त्विषा सातुतिष्ठतिदैत्येन्द्रतांभवान्द्रष्टुमर्हति ॥ ४५ ॥ *
यानिरत्नानिमणयोगजाश्वदीनिवैप्रभो त्रैलोक्येतुसमस्तानिसां-
प्रतंभांतितेगृहे ॥ ४६ ॥ ऐरावतःसमानीतोगजरत्नंपुरन्द-

दीनि यानि रत्नानि भवन्ति समस्तानि तानि सांप्रतं ते गृहे भांति वै त्रैलोकाः त्रैलोक्यं तस्मिन्
त्रैलोक्ये गजश्च अश्वश्च गजाश्वौ गजाश्वौ आदिर्येषां तानि गजाश्वादीनि गजः हस्ती रत्नानि स्व-
जातिश्रेष्ठानि समस्तानि संपूर्णानि तानि रत्नानि सांप्रतं वर्त्तमानकाले ते तव गृहे भवने भांति
शोभन्ते वै इति निश्चयेन अत इयमपि तव भविष्यते वेति भावः ॥ ४६ ॥ तदेवाह विहसोतिऐ-

रावतइति हे प्रभो त्वया पुरन्दरात् ऐरावतः गजरत्नं समानीतः किञ्च अयं पारिजाततरुः तथैव उच्चैःश्रवाः हयः समानीतः पुरन्दरात् इन्द्रात् गजरत्नं गजश्रेष्ठः समानीतः हृतः पारिजातश्चासौ तरुश्च पारिजाततरुः तरुः वृक्षः हयः अश्वः समानीतः हृतः ॥ ४७ ॥ विमानमिति वेधसः अद्भुतं हंससंयुक्तं यत् एतत् विमानं रत्नभूतं आसीत् तत् विमानं ते इह अङ्गणे आनीतं सत् तिष्ठति वेधसः ब्रह्मणः अद्भुतं आश्चर्यकारकं हंसैः संयुक्तं हंससंयुक्तं ते तव इह अस्मिन् ॥ ४८ ॥

रात् पारिजाततरुश्चायंतथैवोच्चैःश्रवाहयः ॥ ४७ ॥ विमानं-
हंससंयुक्तमेतत्तिष्ठतितेंगणे रत्नभूतमिहानीतंयदासीद्वेध-
सोऽद्भुतं ॥ ४८ ॥ निधिरेषमहापद्मःसमानीतोधनेश्वरात् कि-
ञ्जल्किनींददौचाब्धिर्मालामम्लानपङ्कजां ॥ ४९ ॥ *

निधिरिति हे प्रभो त्वया धनेश्वरात् महापद्मः एषः निधिः समानीतः किञ्च अब्धिः अम्लानपङ्कजाम् किञ्जल्किनीं मालां तुभ्यं ददौ धनेश्वरात् कुबेरात् महापद्मः महापद्मनामा निधिः अब्धिः क्षीरसमुद्रः न म्लानानि पङ्कजानि यस्याः सा अम्लानपङ्कजा ताम् अम्लानपङ्कजाम् म्लानानि मलीनानि कमलानि किञ्जल्किनीं तन्नामिकां ॥ ४९ ॥ * *

छत्रमिति हे प्रभो कांचनस्रावि वारुणं छत्रं ते गेहे तिष्ठति तथा अयं स्यन्दनवरः तिष्ठति अयं कः
यः पुरा प्रजापतेः आसीत् कांचनं स्रवतीति काञ्चनस्रावि काञ्चनं सुवर्णं स्रवति वर्षति वरुणस्य
इदं वारुणं ते तव गेहे गृहे स्यन्दनः वरः रथश्रेष्ठः पुरा पूर्वं प्रजापतेः दक्षस्य ॥ ५० ॥ मृत्योरिति
हे प्रभो हे ईश त्वया मृत्योः उत्क्रांतिदानाम शक्तिः हृता सलिलराजस्य पाशः तव भ्रातुः परिग्रहे
तिष्ठति मृत्योः यमस्य उत्क्रांतिदा उत्क्रांतिं मरणं सलिलानां राजा सलिलराजः तस्य सलिलराज-

छत्रंतेवारुणंगेहेकांचनस्रावितिष्ठति तथायंस्यंदनवरोयःपुरा-
सीत्प्रजापतेः ॥ ५० ॥ मृत्योरुत्क्रान्तिदानामशक्तिरीशत्वया-
हृता पाशःसलिलराजस्यभ्रातुस्तवपरिग्रहे ॥ ५१ ॥ निशुम्भ-
स्याब्धिजाताश्चसमस्तारत्नजातयः वह्निरपिददौतुभ्यमग्निशौ-

स्य सलिलानां जलानां सलिलराजस्य वरुणस्य भ्रातुः निशुम्भस्य परिगृह्यते अनेनेति परिग्रहः ह-
स्तः तस्मिन् परिग्रहे हस्ते ॥ ५१ ॥ निशुम्भस्येति हे ईश किञ्च अब्धिजाताः समस्ताः रत्नजातयः
निशुम्भस्य परिग्रहे तिष्ठन्ति किञ्च वह्निः अपि अग्निशौचे वाससी तुभ्यं ददौ अब्धेः जाताः अ-
ब्धिजाः अब्धेः क्षीरसमुद्रात् जाताः उत्पन्नाः समस्ताः संपूर्णाः रत्नजातयः रत्नश्रेष्ठाः परिग्रहे हस्ते

ति प्राप्ते

वह्निः अग्निः अग्निरेवशौचं ययोः ते अग्निशौचे शौचं नैर्मल्यकरणं वाससी वस्त्रे ॥ ५२ ॥ एवमिति हे दैत्येंद्र ते एवं समस्तानि रत्नानि आहृतानि त्वया कल्याणी एषा स्त्रीरत्नं कस्मात् न गृह्यते ते त्वया एवं अनेन प्रकारेण समस्तानि संपूर्णानि कल्याणी कल्याणकारिणी ॥ ५३ ॥
ऋषिरुवाच, निशम्येति हे राजन् चण्डमुण्डयोः इति वचः निशम्य तदा महासुरः सः शुम्भः

चेचवाससी ॥ ५२ ॥ एवंदैत्येंद्ररत्नानिसमस्तान्याहृतानिते स्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते ॥ ५३ ॥ *

ऋषिरुवाच, निशम्येतिवचःशुम्भःसतदाचण्डमुण्डयोः प्रेषयामाससुग्रीवंदूतंदेव्यामहासुरं ॥ ५४ ॥ इतिचेतिचवक्तव्यासागत्वावचनान्मम यथाचाभ्येतिसंप्रीत्यातथाकार्यंत्वयालघु ॥ ५५

सुग्रीवं दूतं देव्याः प्रेषयामास चण्डश्च मुण्डश्च तौ चण्डमुण्डौ तयोः चण्डमुण्डयोः वचः वाक्यं निशम्य श्रुत्वा तदा तस्मिन् काले महांश्चासौ असुरश्च महासुरः असुरः दैत्यः सः प्रसिद्धः सुग्रीवनामकं देव्याः समीपे ॥ ५४ ॥ इतिचेति हे सुग्रीव त्वया गत्वा मम वचनात् इति च इति च सा वक्तव्या यथा च सा संप्रीत्या अभ्येति तथा त्वया लघुकार्यं वचनात् वाक्यात् इदं चेत्यर्थः सा देवी

अभ्येति प्राप्नोति लघुशीघ्रं कार्यं कर्तव्यं ॥ ५५ ॥ स इति सः ततः अतिशोभने यत्रशैलेन्द्रे सा देवी आस्ते तत्र गत्वा तां मधुरया गिरा श्लक्ष्णं यथास्यात्तथा प्राह सः दूतः ततः शुम्भसकाशात् अतिशोभने अतिमनोहरे यत्र यस्मिन् शैलेन्द्रे पर्वतप्रांते आस्ते तिष्ठति तत्र तस्मिन् शैलेन्द्रे शे तां देवीं मधुरया कोमलया गिरा वाण्या श्लक्ष्णं अनुत्कटं प्राह उवाच ॥ ५६ ॥ दूत उवाच देवी-ति हे देवि दैत्येश्वरः त्रैलोक्यपरमेश्वरः शुम्भः भवति तेन त्वत्सकाशं प्रेषितः दूतः अहं इह आ-

सतत्रगत्वायत्रास्तेशैलेन्द्रेऽतिशोभने सादेवीतांततःप्राहश्ल-क्ष्णं मधुरयागिरा ॥ ५६ ॥ दूतउवाच, देविदैत्येश्वरःशुम्भस्त्रै-लोक्येपरमेश्वरः दूतोऽहंप्रेषितस्तेनत्वत्सकाशमिहागतः ५७
अव्याहताज्ञःसर्वासुयःसदादेवयोनिषु निर्जिताखिलदैत्यारिः-

गतः दैत्यानां ईश्वरः दैत्येश्वरः ईश्वरः स्वामी त्रयो लोका इति त्रैलोक्यं त्रैलोक्यस्य परमेश्वरः त्रैलोक्यपरमेश्वरः तेन शुम्भेन त्वत्सकाशं त्वत्समीपं इह अस्मिन् हिमाद्रौ आगतः प्राप्तः ॥ ५७ ॥ तदेवोपपादयति अव्याहतेति हे देवि निर्जिताखिलदैत्यारिः सर्वासु देवयोनिषु यः सदा अव्या-हताज्ञः भवति सः यत् आह तत् त्वं शृणुष्व दैत्यानां अरयः दैत्यारयः अखिलाश्च ते दैत्यारयश्च

शीभूता

अखिलदैत्य र्थः निर्जिताः अखिलदैत्यारयो येन सः निर्जिताखिलदैत्यारिः अरयः शत्रवः देवाः अखिलाः समस्ताः सर्वासु समस्तासु देवयोनिषु विद्याधरादिषु यः शुम्भः सदा सर्वदा न व्याहता आज्ञा यस्य सः अव्याहताज्ञः अव्याहता अप्रतिहता सः शुम्भः तत् वाक्यं आह उवाच तत् वाक्यं ५८ ॥ तदुक्तिमाह ममेति हे देवि अखिलं त्रैलोक्यं मम वश्यं भवति देवाः मम वशानुगाःभवन्ति अहं सर्वान् यज्ञभागान् पृथक् पृथक् उपाश्नामि अखिलं समस्तं त्रयो लोकाः त्रैलोक्यं देवाः इन्द्रा-

सयदाहशृणुष्वतत् ॥ ५८ ॥ ममत्रैलोक्यमखिलंममदेवावशा
नुगाः यज्ञभागानहंसर्वानुपाश्नामिपृथक्पृथक् ॥ ५९ ॥ त्रै-
लोक्येवररत्नानिममवश्यान्यशेषतः तथैवगजरत्नानिहृत्वादेवें-
द्रवाहनं ॥ ६० ॥ * * * * *

दयः वशा अत एव अनुगाः वशानुगाः अनुगाः भृत्याः सर्वान् समस्तान् यज्ञे भागाः यज्ञभागाः तान् यज्ञभागान् पृथक् इन्द्राद्यधिकारभेदेन उपाश्नामि गृह्णामि ॥ ५९ ॥ त्रैलोक्य इति हे देवि त्रैलोक्ये अशेषतः वरः रत्नानि मम वश्यानि भवन्ति हृत्वेत्याद्युत्तरान्वयि मया तथैव गजरत्नानि देवेन्द्रवाहनं हृत्वा त्रयो लोकाः त्रैलोक्यं तस्मिन् त्रैलोक्ये अशेषाणि सकलानि वररत्नाश्रेष्ठानि

वश्यानि वशीभूतानि गजरत्नानि गजश्रेष्ठं देवानां इन्द्रः देवेंद्रः देवेन्द्रस्य वाहनं देवेन्द्रवाहनं इन्द्रः
श्रेष्ठः देवेंद्रवाहनं ऐरावतं हृत्वा हृतः अर्थवशात् विभक्तिविपरिणामः ॥ ६० ॥ * *
क्षीरोदेति हे देवि अमरैः प्रणिपत्य उच्चैःश्रवससंज्ञं तत् अश्वरत्नं मम समर्पितं कथं भूतं अश्व-
रत्नं क्षीरोदमथनोद्भूतं अमरैः देवैः प्रणिपत्य नमस्कृत्य उच्चैःश्रवस इति संज्ञा यस्य तत् उच्चैःश्रव-
ससंज्ञः उच्चैःश्रवसि इत्यत्र पृषोदरादित्वादागमस्थितः समर्पितं दत्तं क्षीरोदस्य मथनं क्षीरोदम-
थनं क्षीरोदमथनात् उद्भूतं क्षीरोदमथनोद्भूतं क्षीरोदस्य क्षीरसमुद्रस्य मथनं विलोडनं उद्भूतं प्रादु-

## क्षीरोदमथनोद्भूतमश्वरत्नं ममामरैः उच्चैःश्रवससंज्ञं तत्प्रणि-
## पत्यसमर्पितं ॥ ६१ ॥ यानिचान्यानिदेवेषुगन्धर्वेषुरगेषुच र-
## त्नभूतानिभूतानितानिमय्येवशोभने ॥ ६२ ॥ स्त्रीरत्नभूतां-

भूतं ॥ ६१ ॥ यानिचेति हे शोभने देवेषु किञ्च गन्धर्वेषु किंच उरगेषु अन्यानि यानि रत्नभूतानि
भूतानि भवन्ति तानि मयि एव तिष्ठन्ति हे शोभने हे मनोहरे देवेषु इन्द्रादिषु उरगेषु सर्पेषु
रत्नभूतानि भूतानि रत्नरूपाणि तानि रत्नानि मयि एव मद्गृहे चतिष्ठन्ति स्थितानीत्यर्थः ॥ ६२ ॥
स्त्रीति हे देवि लोके वयं त्वां स्त्रीरत्नभूतां मन्यामहे अतः सा त्वं अस्मान् उपागच्छ अतः कुतः
यतः वयं रत्नभुजः भवाम स्त्रीरत्नं भवतीति स्त्रीरत्नभूतां त्वाम् स्त्रीरत्नभूतां मन्यामहे जानीमः

यतः अस्मात् कारणात् उपागच्छ आश्रय रत्नं भुजन्तीति रत्नभुजः वयमित्यात्मगौरवार्थंबहुवचनं ॥ ६३ ॥ मांवेति हे चञ्चलापांगि त्वं मां वा मम अनुजं उरुविक्रमं निशुम्भं वापि भज कुतः यतः त्वं रत्नभूता वै असि चञ्चलौ अपांगौ यस्याः सा चञ्चलापांगी तत्सम्बोधने हे चञ्चलापांगि अपांगौ नेत्रांते अनुजं कनिष्ठं भ्रातरं उरुविक्रमो यस्य सः उरुविक्रमः तं उरुविक्रमं उरु महान् विक्रमः पराक्रमः यतः यस्मात् कारणात् वै इति निश्चयेन ॥ ६४ ॥ * * *

त्वांदेविलोकेमन्यामहेवयं सात्वमस्मानुपागच्छयतोरत्नभुजोव-यं ॥ ६३ ॥ मांवाममानुजम्वापिनिशुम्भमुरुविक्रमं भजत्वंचञ्चलापांगीरत्नभूतासिवैयतः ॥ ६४ ॥ परमैश्वर्यमतुलंप्राप्स्यतेमत्परिग्रहात् एतद्बुद्ध्यासमालोच्यमत्परिग्रहतांव्रज ॥ ६५ ॥

परमेति हे देवि त्वं अतुलं परमैश्वर्यं मत्परिग्रहात् प्राप्स्यसि एतत् बुद्ध्या समालोच्य मत्परिग्रहतां व्रज अतुलं महत् परमं च तत् ऐश्वर्यं च परमैश्वर्यं परमं उत्कृष्टं मत्परिग्रहात् समालोच्य विचार्य मत्परिग्रहतां सत्पत्नीत्वं व्रज प्राप्नुहि ॥ ६५ ॥ ऋषिरुवाच, इतीति हे राजन् इति उक्ता सा देवी तदा अन्तःस्थिता सती जगौ सा का यया इदं जगत् धार्यते कथं भूता देवी गम्भीरा पुनः

कथं भूता अन्तःस्मिता पुनः कथं भूता देवी दुर्गा पुनः कथं भूता भगवती पुनः कथं भूता देवी भद्रा इति अनेन प्रकारेण उक्ता कथिता तदा तस्मिन् काले अन्तः स्मितं यस्याः सा अन्तः करणे स्मितं ईषद्धास्यं जगौ उवाच यया देव्या गम्भीरा निश्चला दुर्ज्ञेया भगं अस्ति यस्याः सा भगवती भगं षडैश्वर्यं भद्रमस्ति यस्याः सा भद्रा भद्रं कल्याणं ॥ ६६ ॥ देव्युवाच, सत्यमिति हे दूत त्वया अत्र सत्यं उक्तं त्वया उदितं किञ्चित् मिथ्या न भवति शुम्भः किञ्च तादृशः निशुम्भः अपि

ऋषिरुवाच, इत्युक्तासातदादेवीगम्भीरांतःस्मिताजगौ दुर्गा भगवतीभद्राययेदंधार्यतेजगत् ६६ ॥ देव्युवाच, सत्यमुक्तंत्वया नात्रमिथ्याकिंचित्त्वयोदितं त्रैलोक्याधिपतिःशुम्भोनिशुम्भश्चापि तादृशः ॥ ६७ ॥ किंत्वत्रयत्प्रतिज्ञातंमिथ्यातत्क्रियतेकथं श्रू-

त्रैलोक्याधिपतिः भवति अत्र शुम्भविषये सत्यं यथार्थं उक्तं कथितं उदितं कथितं त्रयो लोकाः त्रैलोक्यं त्रैलोक्यस्य अधिपतिः त्रैलोक्याधिपतिः अधिपतिः स्वामी ॥ ६७ ॥ किंत्विति हे दूत किन्तु अत्र मया यत्प्रतिज्ञातं तत् मिथ्या कथं क्रियते मया पुरा अल्पबुद्धित्वात् या प्रतिज्ञा कृता सा त्वया श्रूयतां अत्र परिग्रहत्वविषये तत् प्रतिज्ञातं पुरा पूर्वं अल्पा बुद्धिर्यस्याः सा अल्पबुद्धिः

अल्पबुद्धिः भावः अल्पबुद्धित्वं तस्मात् अल्पबुद्धित्वात् अल्पा स्वल्पा भावः धर्मः सा प्रतिज्ञा ॥ ६८
प्रतिज्ञातमाह यो मामिति हे दूत संग्रामे यः मां जयति यः मे दर्पं व्यपोहति यः लोके प्रतिब-
लः भवति सः मे भर्ता भविष्यति मे मम दर्पं बलत्वाभिमानं व्यपोहति दूरी करोति मे मम प्र-
तिबलः समानबलः मे मम भर्ता स्वामी ॥ ६९ ॥ तदिति हे दूत तत् अत्र शुम्भः वा महासुरः
निशुम्भः आगच्छतु मां जित्वा लघु मे पाणिं गृह्णातु अत्र चिरेण किं भवति तत् तस्मात् कार-

यतामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ॥ ६८ ॥ योमांजयतिसं
ग्रामेयोमेदर्पंव्यपोहति योमेप्रतिबलोलोकेसमेभर्त्ताभविष्यति
॥ ६९ ॥ तदागच्छतुशुम्भोचनिशुम्भोवामहासुरः मांजित्वाकिं-
चिरेणाचपाणिंगृह्णातुमेलघु ॥ ७० ॥ दूतउवाच, अवलिप्तासि

णात् अत्र अस्मिन् स्थले वा अथवा महांश्चासौ असुरश्च महासुरः असुरः दैत्यः लघु शीघ्रं मे मम
पाणि हस्तं अत्र अस्मिन् विषये चिरेण बहुकालेन किं किम्प्रयोजनं पाणिग्रहणात्पूर्वं मम गमनम-
नुचितमिति भावः ॥ ७० ॥ दूतउवाच, अवलिप्तेति हे देवि त्वं अवलिप्ता असि मम अग्रतः एवं
मा ब्रूहि त्रैलोक्ये कः पुमान् शुम्भनिशुम्भयोः अग्रे तिष्ठेत् अवलिप्ता गर्विता एवं अनेन प्रकारे-

न सा ब्रूहि न कथय त्रयो लोकाः त्रैलोक्यं तस्मिन् त्रैलोक्ये शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः ॥ ७१ ॥ नन्वहं देवीत्यतः स्थास्यामीत्यत आह अन्येषामपीति हे देवि युधि सर्वे देवाः अन्येषां अपि दैत्यानां सन्मुखे न तिष्ठन्ति एकिका स्त्री त्वं तिष्ठेः किं पुनः वै युधि संग्रामे सर्वे समस्ताः एकिका एकाकिनी किं पुनः किं वक्तव्या वै इति निश्चयेन ॥ ७२ ॥ *

इन्द्राद्या इति हे देवि इन्द्राद्याः सकलाः देवाः येषां संयुगे न तस्थुः शुम्भादीनां तेषां सन्मुखं स्त्री

नैवंत्वंदेविब्रूहिमत्समायतः त्रैलोक्येकःपुमांस्तिष्ठेदग्रे शुम्भनिशुम्भयोः ॥ ७१ ॥ अन्येषामपिदैत्यानांसर्वेदेवानवैयुधि तिष्ठन्ति संमुखेदेविकिंपुनःस्त्रीत्वमेकिका ॥ ७२ ॥ इन्द्राद्याःसकलादेवास्तस्थुर्येषांनसंयुगे शुम्भादीनांकथंतेषांस्त्रीप्रयास्यसिसंमुखं ७३

कथं प्रयास्यसि इन्द्रः आद्यो येषां ते इन्द्राद्याः सकलाः समस्ताः येषां दैत्यानां संयुगे संग्रामे शुम्भः आदिर्येषां ते शुम्भादयः तेषां शुम्भादीनां तेषां दैत्यानां प्रयास्यसि तिष्ठसि गमिष्यसि ॥ ७३ ॥ उपसंहरति सात्वमिति हे देवि मया एवं उक्ता सा त्वं शुम्भनिशुम्भयोः पार्श्वं गच्छ विपश्चिद्वाधकमाह त्वं केशाकर्षणनिर्धूतगौरवा सती प्रागमिष्यसि उक्ता कथिता शुम्भश्च निशुम्भश्च तौ शुम्भनिशु-

भ्यौ तयोः शुम्भनिशुम्भयोः पार्श्वं पार्श्वभागं केशानां आकर्षणं केशाकर्षणं केशाकर्षणेन निर्धूतं गौरवं यस्याः सा केशाकर्षणनिर्धूतगौरवा निर्धूतं खण्डितं गौरवं गुरुत्वं ॥ ७४ ॥ देव्युवाच एवमेतदिति हे दूत शुम्भः किञ्च अतिवीर्यवान् निशुम्भः एवं एतत् बली भवति अहं किं करोमि यत् मे पुरा अनालोचिता प्रतिज्ञा कृता अतिवीर्यं विद्यते यस्य सः अतिवीर्यवान् एवं अनेन प्रकारेण एतत् बलमस्यास्तीति बली यत् यस्मात् कारणात् मे मया पुरा पूर्वं अनालोचिता अविचारिता ॥ ७५ ॥

सा त्वं गच्छ मयैवोक्ता पार्श्वं शुम्भनिशुम्भयोः केशाकर्षणनिर्धूतगौरवा मागमिष्यसि ॥ ७४ ॥ देव्युवाच, एवमेतद्बली शुम्भो निशुम्भश्चातिवीर्यवान् किं करोमि प्रतिज्ञा मे यदनालोचिता पुरा ७५ सत्वं गच्छ मयोक्तं ते यदेतत्सर्वमादृतः तदाचक्ष्वासुरेन्द्राय स च-

सत्वमिति हे दूत सः त्वं गच्छ मया ते यत् एतत् उक्तं तत् सर्वं आदृतः सन् असुरेंद्राय आचक्ष्व किञ्च यत् युक्तं भवति सः तत् करोतु ते तुभ्यं उक्तं कथितं आदृतः सन् आदरवान् सन् असुराणां इन्द्रः असुरेन्द्रः तस्मै असुरेन्द्राय असुराणां दैत्यानां इन्द्रः श्रेष्ठः आचक्ष्व कथय युक्तं योग्यं ७६ ॥ इति श्रीनागोजीभट्टसम्मतकृतसप्तशतीव्याख्याने देवीदूतसम्वादो नाम पञ्चमोऽध्यायः ॥ ५ ॥

ऋषिरुवाच, इतीति हे राजन् देव्याः इति वचः आकर्ण्य अमर्षपूरितः सः दूतः समागम्य दैत्य-
राजाय विस्तरात् समाचष्ट वचः वाक्यं आकर्ण्य श्रुत्वा अमर्षेण पूरितः अमर्षपूरितः अमर्षेण क्रो
धेन पूरितः व्याप्तः समागम्य शुम्भसमीपं गत्वा दैत्यानां राजा दैत्यराजः तस्मै दैत्यराजाय विस्त-
रात् वाहुल्येन समाचष्ट उक्तवान् ॥ १ ॥ तस्येति तस्य दूतस्य तत् वाक्यं आकर्ण्य ततः सक्रोधः

युक्तंकरोतुयत् ॥ ७६ ॥ इति मार्कण्डेयपुराणेसावर्णिकेमन्व-
न्तरे देवीमाहात्म्ये देव्यादूतसम्वादोनामपञ्चमोऽध्यायः ॥ ५ ।
ऋषिरुवाच, इत्याकर्ण्यवचोदेव्याःसदूतोमर्षपूरितः समाच-
ष्टसमागम्यदैत्यराजायविस्तरात् ॥ १ ॥ तस्यदूतस्यतद्वाक्यमा-
कर्ण्यासुरराट्ततः सक्रोधःप्राहदैत्यानामधिपंधूम्रलोचनं २

असुरराट् दैत्यानां अधिपं धूम्रलोचनं प्राह तत् पूर्वोक्तं आकर्ण्य श्रुत्वा ततः तदनन्तरं दूतवाक्य-
श्रवणानन्तरं क्रोधेन सह वर्तमानः सक्रोधः सह वर्तमानः युक्तः असुराणां राट् असुरराट् असुरा-
णां दैत्यानां राट् राजा शुम्भः अधिपं सेनापतिं प्राह उवाच ॥ २ ॥ * *
हे इति हे धूम्रलोचन त्वं स्वसैन्यपरिवारितः सन् आशु केशाकर्षणविह्वलां दुष्टां तां बलात् आ-

नय स्वस्य सैन्यं स्वसैन्यं स्वसैन्येन परिवारितः स्वसैन्यपरिवारितः परिवारितः युक्तः केशानां आ-
कर्षणं केशाकर्षणं केशाकर्षणेन विह्वला केशाकर्षणविह्वला ताम् केशाकर्षणविह्वलां विह्वलां आकु-
लां दुष्टां दुर्वचनां तां देवीं बलात् बलात्कारात् आनय प्रापय ॥ ३ ॥ तदिति हे धूम्रलोचन त-
त्परित्राणदः कश्चित् अपरः यदि च उत्तिष्ठते तर्हि त्वया अमरः वा यक्षः अपि वा गन्धर्वः एव सः
हंतव्यः तस्याः परित्राणं तत्परित्राणं तत्परित्राणं ददातीति तत्परित्राणदः तस्याः देव्याः परित्राणं

हेधूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः तामानयबलाद्दुष्टांके-
शाकर्षणविह्वलां ॥ ३ ॥ तत्परित्राणदःकश्चिद्यदिवोत्तिष्ठतेपरः
सहन्तव्योमरोवापियक्षोगन्धर्वएववा ॥ ४ ॥ ऋषिरुवाच, ते-
नाज्ञप्तस्ततःशीघ्रं सदैत्योधूम्रलोचनः वृतःषष्ट्यासहस्राणामसु-

रक्षणं अपरः अन्यः अमरः देवः ॥ ४ ॥ ऋषिरुवाच, तेनेति हे राजन् शीघ्रं तेन आज्ञप्तः धूम्रलो-
चनः सः दैत्यः सहस्राणां असुराणां षष्ट्या वृतः सन् ततः द्रुतं ययौ तेन शुम्भेन आज्ञप्तः प्राप्ताज्ञः
असुराणां दैत्यानां वृतः युक्तः ततः तदनन्तरं शुम्भाज्ञाग्रहीतानन्तरं द्रुतं शीघ्रं ययौ जगाम ॥ ५ ॥
स इति हे राजन् ततः सः तुहिनाचलसंस्थितां तां देवीं दृष्ट्वा उच्चैः इति जगाद इतीति किं हे

देवि त्वं शुम्भनिशुम्भयोः मूलं प्रयाहि ततः तदनन्तरं गमनानन्तरं सद्दूतः तुहिनाचले संस्थिता तुहिनाचलसंस्थिता तां तुहिनाचलसंस्थितां तुहिनाचले हिमाचले तां प्रसिद्धां उच्चैः उच्चस्वरेण जगाद उवाच शुम्भस्य निशुम्भस्य तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः मूलं समीपं प्रयाहि गच्छ विपक्षेबाधकमाह ॥ ६ ॥ * * * * * नचेदिति हे देवि भवती अथ प्रीत्या मद्भर्तारं न उपैष्यति चेत् ततः एषः अहं केशाकर्षणविह्वलां

राणांद्भुतंययौ ॥ ५ ॥ सद्दृष्ट्वातांततोदेवींतुहिनाचलसंस्थितां-

जगादोच्चैःप्रयाहीतिमूलंशुम्भनिशुम्भयोः ॥ ६ ॥ *

नचेत्प्रीत्याद्यभवतीमद्भर्तारमुपैष्यति ततोबलान्नयाम्येषके-

शाकर्षणविह्वलां ॥ ७ ॥ देव्युवाच, दैत्येश्वरेणप्रहितोबलवा-

त्वां बलात् नयामि अद्य इदानीं मम भर्ता मद्भर्तारं भर्तारं स्वामिनं शुम्भं चेत् यदि ततः तर्हि एषः विद्यमानः बलात् बलात्कारात् ॥ ७ ॥ देव्युवाच, दैत्येश्वरेणेति हे दूत दैत्येश्वरेण प्रहितः बलवान् बलसंवृतः त्वं एवं मां बलात् नयसि ततः अहं ते किं करोमि दैत्यानां ईश्वरः दैत्येश्वरः तेन दैत्येश्वरेण शुम्भेन प्रहितः प्रेषितः बलं विद्यते यस्य सः बलवान् बलेन संवृतः बलसंवृतः बलेन सैन्ये-

न संवृत: युक्त: एवं यदि बलात्कारात् नयसि प्रापयसि ततः तर्हि ते तव ॥ ८ ॥ ऋषिरुवाच, इतीति हे राजन् उक्त: सः धूम्रलोचनः असुरः तां अभ्यधावत् तदा सा अम्बिका तं हुङ्कारेण एव भस्म चकार उक्त: कथित: असुरः दैत्यः तां देवीं तदा तस्मिन् काले अम्बिका देवी तं धूम्रलोचनं ॥ ९ ॥ अथेति हे राजन् अथ अम्बिका तथा क्रुद्धं असुराणां महासैन्यं तीक्ष्णैः शायकैः तथा शक्तिपरश्वधैः ववर्ष अथ अथेत्यनन्तरं धूम्रलोचनवधानन्तरं अम्बिका देवी असुराणां दैत्यानां महच्च

न्त्वलसंवृत: बलान्नयसिमामेवन्ततःकिंतेकरोम्यहं ८ ऋषिरुवाच, इत्युक्तःसोभ्यधावत्तामसुरोधूम्रलोचनः हुङ्कारेणैवतं भस्मसाचकारांबिकाततः ॥ ९ ॥ अथक्रुद्धं महासैन्यमसुराणां तथांबिका ववर्षसायकैस्तीक्ष्णैस्तथाशक्तिपरश्वधैः ॥ १० ॥ *

तत् सैन्यं च महासैन्यं तत् महासैन्यं सायकैः बाणैः शक्तयश्च परश्वधाश्च ते शक्तिपरश्वधाः तैः शक्तिपरश्वधैः ॥ १० ॥ * *

निर्नायकसैन्ये देव्याः प्रयासे व्यर्थं इति मत्वा सिंहो युयुधे तत इति हे राजन् ततः देव्याः स्ववाहनः सिंहः धुतसटः सन् कोपात् सुभैरवं नादं कृत्वा असुरसेनायां पपात ततः तदनन्तरं नि-

नायकसैन्यदर्शनानंतरं स्वस्य वाहनः स्ववाहनः धुताः सटाः येन सः धुतसटः धुताः कम्पिताः सटाः ग्रीवाकेशाः कोपात् क्रोधात् सुभैरवं महांतं नादं शब्दं असुराणां सेना असुरसेना तस्यां असुरसेनायां असुराणां दैत्यानां पपात प्राविशत् स्ववाहन इति अर्शाद्यादित्वात् पुंस्त्वीयवाहनद्रूत्यर्थः ॥ ११ ॥ कांश्चिदिति हे राजन् सः कांश्चित् दैत्यान् करप्रहारेण जघान किञ्च अपरान् दैत्यान् आस्येन जघान किञ्च अन्यान् महासुरान् अधरेण आक्रांत्या जघान सः सिंहः करेण प्रहारः

ततोधुतसटःकोपात्कृत्वानादंसुभैरवं पपातासुरसेनायांसिंहोदेव्याःस्ववाहनः ॥ ११ ॥ कांश्चित्करप्रहारेणदैत्यानास्येनचापरान् आक्रांत्याचाधरेणान्यान्जघानसुमहासुरान् ॥ १२
केषांचित्पाटयामासनखैःकोष्ठानिकेसरी तथातलप्रहारेणशि

करप्रहारः तेन करप्रहारेण करो हस्तः अपरान् अन्यान् आस्येन मुखेन् अधरेण अधरकायेन यद्वा अधरोष्ठेन आक्रान्त्या आक्रमणेन ॥ १२ ॥ केषामिति हे राजन् केसरी केषांचित् कोष्ठानि नखैः पाटयामास तथा तलप्रहारेण शिरांसि पृथक् कृतवान् केसरी सिंहः कोष्ठानि उदरमध्यानि तलेन प्रहारः तलप्रहारः तेन तलप्रहारेण तलेन विस्तृतांगुलिपाणिना शिरांसि मस्तकानि पृथक् देहात्

भिन्नानि ॥ १३ ॥ विच्छिन्नेति हे राजन् तथा तेन अपरे विच्छिन्नबाहुशिरसः कृताः किञ्च धुतकेसरः सः अन्येषां कोष्ठात् रुधिरं पपौ तेन सिंहेन अपरे अन्ये दैत्याः बाहवश्च शिरांसि बाहुशिरांसि विच्छिन्नानि बाहुशिरांसि येषां ते विच्छिन्नबाहुशिरसः सः सिंहः अन्येषां दैत्यानां कोष्ठात् उदरमध्यात् ॥ १४ ॥ * * *

क्षणेनेति हे राजन् महात्मना देव्या वाहनेन अतिकोपिना तेन केसरिणा सर्वं तत् बलं क्षणेन

रांसि कृतवान्पृथक् ॥ १३ ॥ विच्छिन्नबाहुशिरसः कृतास्तेन तथापरे पपौ च रुधिरं कोष्ठादन्येषां धुतकेसरः ॥ १४ ॥ *

क्षणेन तद्बलं सर्वं क्षयं नीतं महात्मना तेन केशरिणा देव्या वाहनेनातिकोपिना ॥ १५ ॥ श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनं

क्षयं नीतं महात्मना बलवता अतिकोपोऽस्यास्तीति अतिकोपी तेन अतिकोपिना अतिकोपः अतिक्रोधः केसरिणा सिंहेन सर्वं समस्तं बलं सैन्यं क्षणेन क्षणमात्रेण क्षयं नाशं नीतं प्रापितं ॥ १५

श्रुत्वेति हे राजन् देव्या निहतं तं धूम्रलोचनं असुरं श्रुत्वा किञ्च देवीकेसरिणा कृत्स्नं बलं क्षपितं श्रुत्वा ततः दैत्याधिपतिः शुम्भः प्रस्फुरिताधरः सन् चुकोप किञ्च तौ महासुरौ चण्डमुण्डौ आ-

ज्ञापयामास निहतं प्रहारितं असुरं दैत्यं देव्याः केसरी देवीकेसरी तेन देवीकेसरिणा केसरी सिंहः
कृत्स्नं समस्तं वलं सैन्यं क्षपितं नाशितं ततः तदनन्तरं धूम्रलोचनवधश्रवणानन्तरं दैत्यानां अधिपतिः
दैत्याधिपतिः अधिपतिः स्वामी प्रस्फुरितः अधरो यस्य सः प्रस्फुरिताधरः प्रस्फुरितः कम्पितः
अधरः अधरौष्ठः तौ पूर्वोक्तौ महांतौ च तौ असुरौ च महासुरौ असुरौ दैत्यौ चण्डश्च मुण्डश्च तौ
चण्डमुण्डौ ॥ १६ ॥ हे चंडेति हे चण्ड हे मुण्ड युवां वहुलैः वलैः परिवारितौ सन्तौ तत्र गच्छ-

वलंचक्षपितंकृत्स्नं देवीकेसरिणाततः ॥ १६ ॥ चुकोपदैत्याधि
पतिःशुम्भःप्रस्फुरिताधरः आज्ञापयामासचतौचण्डमुण्डौम-
हासुरौ ॥ १७ ॥ हेचण्डहेमुण्डवलैर्वहुलैःपरिवारितौतत्रग
च्छतगत्वाचसासमानीयतांलघु ॥ १८ ॥

*

त किञ्च गत्वा युवाभ्यां लघु सा समानीयतां वहुलैः वहुभिः वलैः सैन्यैः परिवारितौ सन्तौ रक्षि-
तौ तत्र तस्मिन् देवीनिकटे गच्छत गच्छतं छन्दोनुरोधाद्बिन्दुलोपः लघु शीघ्रं सा देवी ॥ १८ ॥
आनयने प्रकारद्वयमाह केशेष्विति हे चण्ड हे मुण्ड केशेषु आकृष्य वा वध्वा यदि वः युधि संश-
यः भवति तदा अशेषायुधैः सर्वैः असुरैः सा विनिहन्यतां केशेषु केशैरित्यर्थः वाथवा वः वाम् यु-

वयो: युधि संग्रामे संशय: संदेह: तदा तर्हि अशेषाणि आयुधानि येषां ते अशेषायुधा: तै: अशेषायुधै: अशेषाणि समस्तानि आयुधानि शस्त्राणि सर्वै: समस्तै: असुरै: दैत्यै: सा देवी विनिहन्यतां मार्य्यतामित्यर्थ: ॥ १९ ॥ उपसंहरति तस्यामिति हे चण्ड हे मुण्ड युवाभ्यां दुष्टायां तस्यां हतायां सत्यां किञ्च सिंहे विनिपातिते सति अथ तां अम्बिकां बध्वा वा गृहीत्वा शीघ्रं आगम्यतां

केशेष्वाकृष्यबध्वावायदिव:संशयोयुधि तदाशेषायुधै:सर्वैरसुरैर्विनिहन्यतां ॥ १९ ॥ तस्यांहतायांदुष्टायांसिंहेचविनिपातिते शीघ्रमागम्यतांबध्वागृहीत्वातामथांबिकां ॥ २० ॥ इति श्रीमार्कण्डेयपुराणे सावर्णिकेमन्वन्तरे देवीमाहात्म्ये धूम्रलोचनवध: षष्ठोऽध्याय: ॥ ६ ॥ * * *

दुष्टायां दुर्वचनायां तस्यां अम्बिकायां हतायां सत्यां प्राप्तायां सत्यां विनिपातिते सति प्रहारिते सति अथेति पक्षांतरे अम्बिकां देवीं वा अथवा ॥ २० ॥ इति श्रीनागोजीसम्मतकृते सप्तशतीव्याख्याने धूम्रलोचनवधोनाम षष्ठोऽध्याय: ॥ ६ ॥ * * *

ऋषिरुवाच, आज्ञप्ता इति हे राजन् तत: आज्ञप्ता: चण्डमुण्डपुरोगमा: चतुरङ्गबलोपेता: दैत्या:

तु अभ्युद्यतायुधाः सन्तः ययुः ततः तेन शुम्भेन आज्ञप्ता आज्ञाकृताः चण्डश्च मुण्डश्च चण्डमुण्डौ चण्डमुण्डौ पुरोगमौ येषां ते चण्डमुण्डपुरोगमाः पुरोगमौ अग्रसरौ चत्वारि अङ्गानि यस्य तत् चतुरङ्गं चतुरङ्गं च तत् बलं च चतुरङ्गबलं चतुरङ्गबलेन उपेताः चतुरङ्गबलोपेताः चतुरङ्गं हस्त्यश्वरथपादात्तं बलं सैन्यं उपेताः उक्ताः अभ्युद्यतायुधाः निष्काशितायुधाः ययुः जग्मुः ॥ १ ॥ *

ऋषिरुवाच, आज्ञप्तास्तेततोदैत्याश्चंडमुण्डपुरोगमाः चतुरङ्गबलोपेताययुरभ्युद्यतायुधाः ॥ १ ॥ * * *

ददृशुस्तेततोदेवीमीषद्धासांव्यवस्थितां सिंहस्योपरिशैलेंद्रशृङ्गे महतिकांचने ॥ २ ॥ तेदृष्ट्वातांसमादातुमुद्यमञ्चक्रुरुद्यताः आकृष्टचापासिधरास्तथान्येतत्समीपगाः ॥ ३ ॥ ततःकोपंच-

ददृशुरिति शैलेंद्रशृङ्गे हिमाचलशृङ्गे सिंहस्योपरि स्थितामित्यन्वयः ॥ २ ॥ ते इति चण्डादयः प्रधानाः समादातुं ग्रहीतुं उद्यमं उद्योगं उद्यताः उत्साहवन्तो जाताः आकृष्टं कोशादुद्धृतश्च तत्समीपगाः ग्रहीतुमुद्यतानां रक्षणार्थं समीपगा इत्यर्थः ॥ ३ ॥ अनेन चण्डादीनामपि तामसत्वं ध्वनितं अतस्तद्वधार्थमिति तामसी प्रादुर्भावमाह तत इति मसी लिपिसाधनद्रव्यं तद्वत् श्यामव-

यां निःसरत्कालो प्रतिबिम्बादिति भावः भृकुटीति तस्या कुपितदेव्याः विनिष्क्रान्ता निःसृता ५
विचित्रेति कथं भूता काली विचित्रखट्वाङ्गधरा धरतीति धरा विचित्रं च तत् खट्वांगं च विचित्रखट्वांगं विचित्रखट्वाङ्गस्य धरा विचित्रखट्वाङ्गधरा धारयति विचित्रं नानाविधं खट्वाङ्गं पट्टिकाकङ्कालं यद्वा पञ्जरास्थि पुनः कथं भूता काली नरमालाविभूषणा नरमालाविभूषणं यस्याः सा नर-

कारोच्चैरम्बिकातानरोन्प्रति कोपेनचास्यावदनंमसीवर्णमभूत्तदा ॥ ४ ॥ भृकुटीकुटिलात्तस्याललाटफलकाद्द्रुतं काली-करालवदनाविनिष्क्रांतासिपाशिनी ॥ ५ ॥ * *
विचित्रखट्वाङ्गधरानरमालाविभूषणा द्वीपिचर्मपरीधानाशुष्कमांसातिभैरवा ॥ ६ ॥ अतिविस्तारवदनाजिह्वाललनभीष-

मालाविभूषणा नरमाला मुण्डमाला नरमाले इत्यत्र नरशब्दस्तु मुण्डलाक्षणिकः पुनः कथं भूता काली द्वीपिचर्मपरीधाना द्वीपिनः चर्म द्वीपिचर्म द्वीपिचर्मपरीधानं यस्याः सा द्वीपिचर्मपरीधाना द्वीपी व्याघ्रः परीधानं वस्त्रं पुनः कथं भूता काली शुष्कमांसा शुष्कं मांसं यस्याः सा शुष्कमांसा अर्थात् निर्मांसदेहा पुनः कथं भूता काली अतिभैरवा अतिभयं रवो यस्याः सा अतिभैरवा अति

अत्यन्तं भयं भयंकरं रवः शब्दः ॥ ६ ॥ अतीति पुनः कथं भूता काली अतिविस्तारवदना अति-
विस्तारो यस्य तत् अतिविस्तारं अतिविस्तारं वदनं यस्याः सा अतिविस्तारवदना अति अतिशयि-
तः वदनं मुखं पुनः कथं भूताकाली जिह्वाललनभीषणा जिह्वायाः ललनंजिह्वाललनं जिह्वाललनेन
भीषणा जिह्वाललनभीषणा ललनं चालनं भीषणा भयङ्करी पुनः कथं भूता काली निमग्नारक्त-
नयना आरक्तानि च नयनानि च आरक्तनयनानि निमग्नानि आरक्तनयनानि यस्याः सा निमग्ना-
रक्तनयना आरक्तानि अरुणानि नयनानि नेत्राणि निमग्नानि अन्तः प्रविष्टानि पुनः कथं भूता

**णा निमग्नारक्तनयनानादापूरितदिङ्मुखा ॥ ७ ॥ ***
**सावेगेनाभिपतिताघातयंतीमहासुरान् सैन्येतत्रसुरारीणा-**
**मभक्षयततद्बलं ॥ ८ ॥ पार्ष्णिग्राहांकुशग्राहियोधघण्टासम-**

काली नादापूरितदिङ्मुखा दिशां मुखं दिङ्मुखं नादेन आपूरितं दिङ्मुखं यया सा नादापूरित-
दिङ्मुखा नादेन शब्देन आपूरितं व्याप्तं ॥ ७ ॥ * * *
सेति हे राजन् सुरारीणां तत्र सैन्ये वेगेन अभिपतिता सा महासुरान् घातयन्ती सती तत् बलं
अभक्षयत सुराणां अरयः सुरारयः तेषां सुरारीणां सुराणां देवानां अरयः शत्रवः दैत्याः तत्र तस्मिन्
सैन्ये सा देवी महासुरान् महा दैत्यान् बलं सैन्यं ॥ ८ ॥ पार्ष्णीति हे राजन् सा पार्ष्णिग्राहां

कुशग्राहियोधघण्टासमन्वितान् वारणान् एकहस्तेन समादाय मुखे चिक्षेप सा देवी घण्टाभिः समन्विताः घण्टासमन्विताः पार्ष्णिग्राहाश्च अंकुशग्राहिणश्च योधाश्च घण्टासमन्विताश्च ते पार्ष्णिग्राहांकुशग्राहियोधघण्टासमन्विताः तान् पार्ष्णिग्राहांकुशग्राहियोधघण्टासमन्वितान् समन्विताः युक्ताः पार्ष्णिग्राहाः गजपार्श्वरक्षकाः अंकुशग्राहिणः महामात्राः योधाः गजारूढावीराः वारणान् हस्तिनः एकश्चासौ हस्तश्च एकहस्तः तेन एकहस्तेन समादाय गृहीत्वा ॥ ९ ॥ तथैवेति

**न्वितान् समादायैकहस्तेनमुखेचिक्षेपवारणान् ॥ ९ ॥ तथैवयोधंतुरगैरथंसारथिनासह निःक्षिप्यवक्त्रेदशनैश्चर्वयत्यतिभैरवं ॥ १० ॥ एकंजग्राहकेशेषुग्रीवायामथचापरं पादेनाक्रम्यचैवान्यमुरसान्यमपोथयत् ॥ ११ ॥**

* *

हे राजन् तथैव योधं तुरगैः सारथिना सह रथं वक्त्रे निक्षिप्य दशनैः अति भैरवं यथास्यात्तथा चर्वयति योधं योद्धारं योधमिति जातावेकवचनं तुरगैः अश्वैः वक्त्रे मुखे निक्षिप्य गृहीत्वा दशनैः दंतैः अतिभैरवं यथास्यात्तथा अतिभयङ्करं यथास्यात्तथा चर्वयतीति वर्तमानसामीप्ये भूतेलट् ॥ १० एकमिति हे राजन् सा एकं केशेषु जग्राह अथ च अपरं अन्यं ग्रीवायां जग्राह किञ्च अ-

न्यथा पादेन एव आक्रम्य उरसा अपीथयत् सा काली ग्रीवायांकण्ठे पादेन चरणेन उरसा वक्ष-
स्थलेन अपीथयत् अवधीत् ॥ ११ ॥ * * * *
तैरिति हे राजन् सा तैः असुरैः मुक्तानि शस्त्राणि तथा महास्त्राणि मुखेन रुषा जग्राह किञ्च द-
शनैः मथितान्यपि तैः प्रसिद्धैः असुरैः दैत्यैः मुक्तानि क्षिप्तानि महास्त्राणि ब्रह्मास्त्रादीनि रुषा क्रो-
धेन दशनैः दंतैः मथितान्यपि मथितानीव चकारेत्यर्थः ॥ १२ ॥ बलिनामिति हे राजन् सा ब-

तैर्मुक्तानिचशस्त्राणिमहास्त्राणितथासुरैः मुखेनजग्राहरुषा-
दशनैर्मथितान्यपि ॥ १२ ॥ बलिनांतद्बलंसर्वमसुराणांमहा-
त्मनां ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा ॥ १३ ॥ असि-
नानिहताःकेचित्केचित्खट्वांगताडिताः जग्मुर्विनाशमसु-

लिनां महात्मनां असुराणां सर्वं तत् बलं ममर्द किञ्च अन्यान् अभक्षयत् तथा च अन्यान् अता-
डयत् सा काली बलमस्ति येषां ते बलिनः तेषां बलिनां बलं पराक्रमः महात्मनां महादेहानां
असुराणां दैत्यानां सर्वं समस्तं बलं सैन्यं ममर्द असर्दयत् अन्यान् दैत्यान् ॥ १३ ॥ असिनेति हे
राजन् तया केचित् दैत्याः असिना निहताः सन्तः विनाशं जग्मुः तथा केचित् असुराः दन्ता-

ग्राभिहताः सन्तः विनाशं जग्मुः तया काल्या असिना खड्गेन निहताः सन्तः प्रहारिताः सन्तः
खट्वाङ्गेन ताडिताः खट्वाङ्गेन पट्टिकया यद्वा नरास्थिपञ्जरेण ताडिताः सन्तः प्रहारिताः सन्तः अ-
सुराः दैत्याः दन्तानां अग्राणि दन्ताग्राणि दन्ताग्रैः अभिहताः दन्ताग्राभिहताः अभिहताः ताडि-
ताः विनाशं मरणं जग्मुः प्रापुः ॥ १४ ॥ क्षणेनेति तया असुराणां सर्वं तत् बलं क्षणेन निपाति-
तं दृष्ट्वा चण्डः अतिभीषणां तां कालीं अभिदुद्राव तया काल्या असुराणां दैत्यानां सर्वं समस्तं

**रादन्ताग्राभिहतास्तथा ॥ १४ ॥ क्षणेनतद्बलंसर्वमसुराणां-**
**निपातितं दृष्ट्वाचण्डोभिदुद्रावतांकालीमतिभीषणां ॥ १५ ॥**
**शरवर्षैर्महाभीमैर्भीमाक्षींतांमहासुरः छादयामासचक्रैश्च-**
**मुण्डक्षिप्तैःसहस्रशः ॥ १६ ॥ तानिचक्राण्यनेकानिविशमा-**

बलं सैन्यं क्षणेन क्षणमात्रेण निपातितं प्रहारितं अतिभीषणां अतिभयङ्करीं तां प्रसिद्धां ॥ १५ ॥
शरेति हे राजन् महासुरः चण्डः महाभीमैः शरवर्षैः किञ्च मुण्डः सहस्रशः क्षिप्तैः चक्रैः भी
माक्षीं तां छादयामास महासुरः महादैत्यः महाभीमैः महाभयङ्करैः शराणां वर्षाणि शरवर्षाणि
तैः शरवर्षैः शराणां बाणानां वर्षाणि वृष्टयः भीमानि अक्षीणि यस्याः सा भीमाक्षी ताम् भीमा-

चौम् भीसानि भयङ्कराणि अचीणि नेत्राणि तां देवीं ॥ १६ ॥ तानीति हे राजन् तन्मुखं विशमानानि अनेकानि तानि चक्राणि घनोदरं विशमानानि सुवह्ननि अर्कविम्बानि यथा बभुः तस्याः मुखं तन्मुखं तस्याः काल्याः विशमानानि प्रविष्टानि घनस्य उदरं घनोदरं तत् घनोदरंघनस्य मेघस्य उदरं मध्यं विशमानानि प्रविष्टानि सुवह्ननि अनेकानि अर्कस्य विम्बानि अर्कविंबानि अर्कस्य सूर्यस्य विम्बानि मण्डलानि यथा इव बभुः शुशुभिरे ॥ १७ ॥ तत इति हे राजन् ततः तदनन्तरं साकाली अतिरुषा भीमं यथास्यात्तथा जहास अतिरुषा अतिक्रोधेन भीमं भयङ्करं

**नानितन्मुखं बभुर्यथार्कविम्बानिसुवह्ननिघनोदरं ॥ १७ ॥ ततोजहासातिरुषाभीमम्भैरवनादिनी कालीकरालवक्त्रान्तर्दुर्दर्शदशनोज्ज्वला ॥ १८ ॥**

* *

यथास्यात्तथा कथं भूता काली भैरवनादिनी भैरवः नादो यस्याः सा भैरवनादिनी भैरवःभयङ्करः नादः शब्दः पुनः कथं भूता काली करालवक्त्रांतर्दुर्दर्शदशनोज्ज्वला दुर्दर्शाश्च ते दशनाश्च दुर्दर्शदशनाः करालं च तत् वक्त्रं च करालवक्त्रं करालवक्त्रस्य अन्तः करालवक्त्रान्तः करालवक्त्रांते दुर्दर्शदशनाः करालवक्त्रान्तर्दुर्दर्शदशनाः करालवक्त्रांतर्दुर्दर्शदशनैः उज्ज्वला करालवक्त्रांत दुर्दर्शदशनोज्ज्वला दुर्दर्शाः भयङ्कराः दशनाः दन्ताः करालं भयङ्करं वक्त्रं मुखं अन्तः मध्यं उज्ज्वला तेजोमया ॥ १८

दुर्गा

टी०

७३

उत्थाय चेति हे राजन् देवी महासिं उत्थाय इमित्युक्त्वा चण्डं अधावत किञ्च केशेषु गृहीत्वा
अस्य शिरः तेन असिना अच्छिनत् महांसासौ असिश्च महासिः तं महासिं असिः खड्गः केशेषु
केशान् अस्य चण्डस्य शिरः मस्तकं असिना खड्गेन ॥ १९ ॥ अथेति हे राजन् अथ चण्डं निपाति-
तं दृष्ट्वा मुण्डः तां अभ्यधावत सा रुषा खड्गाभिहतं अपि भूमौ अपातयत् अथ अथेत्यनन्तरं च-
ण्डवधानन्तरं निपातितं प्रहारितं तां कालीं सा काली रुषा क्रोधेन खड्गेन अभिहतः खड्गासि-

उत्थायचमहासिंहंदेवीचण्डमधावत गृहीत्वाचास्यकेशेषुशि-
रस्तेनासिनाच्छिनत् ॥ १९ ॥ अथमुण्डोऽभ्यधावत्तांदृष्ट्वाचण्डं-
निपातितं तमप्यपातयद्भूमौसाखड्गाभिहतंरुषा ॥ २० ॥ हत
शेषंततःसैन्यं दृष्ट्वाचण्डन्निपातितं मुण्डंचसुमहावीर्यंदिशो-

तः तं खड्गाभिहतं अभिहतः ताडितः तं मुंडं ॥ २० ॥ हत इति हे राजन् ततः हतशेषं सैन्यं च-
ण्डं किञ्च सुमहावीर्यं मुण्डं निपातितं दृष्ट्वा दिशः भयातुरं यथास्थानस्तथा भेजे ततः तदनन्तरं च-
ण्डमुण्डवधानन्तरं हतात्शेषं हतशेषं हतात् प्रहारितात् शेषं अवशिष्टं महत्वीर्यं यस्य सः महावीर्यः
तं महावीर्यं वीर्यं पराक्रमः निपातितं प्रहारितं भयेन आतुरं भयातुरं आतुरं व्याकुलं २१ ॥ शिर

इति हे राजन् काली चण्डस्य शिरः किञ्च मुण्डं एव गृहीत्वा चण्डिकां अभ्येत्य चण्डाट्टहाससमि-
श्रं यथास्यात्तथा प्राह शिरः मस्तकं मुण्डं सशिरस्कं एवचण्डिकां देवीं अभ्येत्य अभिमुखमागत्य
प्रचण्डश्चासौ अट्टहासश्च प्रचण्डाट्टहासः प्रचण्डाट्टहासेन मिश्रं प्रचण्डाट्टहासमिश्रं प्रचण्डः महान्
मिश्रं युक्तं प्राह उवाच ॥ २२ ॥ * * * *

मयेति हे देवि मया महापशू चण्डमुण्डौ तव उपहृतौ अत्र युद्धयज्ञे स्वयं शुम्भं किञ्च निशुंभं

भेजेभयातुरं ॥ २१ ॥ शिरश्चण्डस्यकालीचगृहीत्वामुण्डमेवच
प्राहप्रचण्डाट्टहाससमिश्रमभ्येत्यचण्डिकां ॥ २२ ॥ *
मयातवात्रोपहृतौचण्डमुण्डौमहापशू युद्धयज्ञे स्वयंशुम्भंनिशु-
म्भंचहनिष्यसि ॥ २३ ॥ ऋषिरुवाच, तावानीतौततोदृष्ट्वाच-

हनिष्यसि महांतौ च तौ पशू च महापशू चण्डस्य मुण्डस्य तौ चण्डमुण्डौ उपहृतौ उपहारीकृतौ
अत्र अस्मिन् युद्ध एव यज्ञः युद्धयज्ञः तस्मिन् युद्धयज्ञे ॥ २३ ॥ ऋषिरुवाच, ताविति हे राजन् त-
तः आनीतौ महासुरौ तौ चण्डमुण्डौ दृष्ट्वा कल्याणी चण्डिका काली ललितं वचः उवाच ततः
तदनन्तरं कालीवाक्यश्रवणानन्तरं महांतौ च तौ असुरौ च महासुरौ असुरौ दैत्यौ तौ प्रसिद्धौ

चण्डश्च मुण्डश्च तौ चण्डमुण्डौ कल्याणी कल्याणकर्त्री चण्डिका कौशिकी कालीं ललाटभवां देवीं ललितं मनोहरं वचः वाक्यं ॥ २४ ॥ यस्मादिति हे देवि यस्मात् त्वं चण्डं किञ्च मुण्डं गृहीत्वा उपागता ततः त्वं लोके चामुण्डा इति ख्याता भविष्यसि यस्मात् यस्मात्कारणात् उपागता प्राप्ता ततः तस्मात् कारणात् ॥ २५ ॥ इति श्रीनागोजीभट्टसम्मतकृते सप्तशतीव्याख्याने च-

ण्डमुण्डौ महासुरौ उवाच कालीं कल्याणी ललितं चण्डिका व-
चः ॥ २४ ॥ यस्माच्चण्डञ्च मुण्डं च गृहीत्वा त्वमुपागता चामुण्डे
ति ततो लोके ख्याता देवि भविष्यसि ॥ २५ ॥ इति मार्कण्डेयपु
राणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये चण्डमुण्डवधो नाम सप्त
मोऽध्यायः ॥ ७ ॥

* *

ण्डमुण्डवधोनामसप्तमोऽध्यायः ॥ ७ ॥ * * *

ऋषिरुवाच, चंडे इति हे राजन् दैत्ये चंडे निहते सति किञ्च मुंडे विनिपातिते सति किञ्च बहुलेषु सैन्येषु क्षपितेषु सत्सु कोपपराधीनचेताः प्रतापवान् असुरेश्वरः ततः शुम्भः सर्वसैन्यानां दैत्यानां उद्योगं आदिदेशह निहते सति प्रहारिते सति विनिपातिते सति मृते सति बहुलेषु अने-

केषु क्षपितेषु सत्सु क्षीणेषु सत्सु कोपेन पराधीनं चेतो यस्य सः कोपपराधीनचेताः कोपेन क्रो-
धेन पराधीनं परतन्त्रं चेतः अन्तःकरणं प्रतापो विद्यते तस्य सः प्रतापवान् प्रतापः तेजः असुराणां
ईश्वरः असुरेश्वरः असुराणां दैत्यानां ईश्वरः स्वामी सः इति ततः सर्वाणि सैन्यानि येषां ते सर्व-
सैन्याः तेषां सर्वसैन्यानां सर्वाणि समस्तानि उद्योगं उद्यमं आदिदेश आज्ञापयामास हेति पाद-
पूरणे ॥ १ । २ ॥ अद्येति अद्य सर्ववलैः सहिताः दैत्याः निर्यांतु उदायुधाः षट्अशीतिः दैत्या नि-

ऋषिरुवाच, चंडेचनिहतेदैत्येमुंडेचविनिपातिते वहुलेषुच-
सैन्येषुक्षपितेष्वसुरेश्वरः ॥ १ ॥ ततःकोपपराधीनचेताःशुम्भः-
प्रतापवान् उद्योगंसर्वसैन्यानांदैत्यानामादिदेशह ॥ २ ॥ अ-
द्यसर्ववलैर्दैत्याःषडशीतिरुदायुधाः कंवूनांचतुराशीतिर्निर्यां-

यान्तु किञ्च कंवूनां चतुः अशीतिः दैत्याः स्ववलैः हृताः सन्तः निर्यान्तु अद्य इदानीं वर्तमानकाले
सर्वाणि च तानि वलानि च सर्ववलानि तैः सर्ववलैः सर्वाणि समस्तानि वलानि सैन्यानि सहिताः
युक्ताः निर्यान्तु निर्गच्छन्तु उदायुधाः उदायुधनामानः कंवूनां कंवुनाम्नां स्वस्य वलानि स्ववलानि
तैः स्ववलैः वलानि सैन्यानि हृताः सन्तः वेष्टिताः सन्तः निर्यान्तु निर्गच्छन्तु ॥ ३ ॥ कोटीति मम

आज्ञया कोटिवीर्याणि असुराणां पञ्चाशत् कुलानि वै निर्गच्छन्तु धौम्राणां शतं कुलानि निर्गच्छन्तु कोटिवीर्याणि कोटिवीर्यनामानः दैत्याः असुराणां दैत्यानां कुलानि वृन्दानि वै इति निश्चयेन धौम्राणां धूम्रवंशोद्भवानां दैत्यानां कुलानि वृन्दानि ॥ ४ ॥ * * *

कालकादाविति कालकाः दौर्हृदाः मौर्याः तथा कालकेयाः असुराः युद्धाय सज्जाः सन्तः मम आज्ञयात्वरिता निर्यान्तु कालकाः कालकानामानः दैत्याः दौर्हृदाः दुर्हृदवंशजाः दैत्याः मौर्याः

तुस्ववलैर्वृताः ॥ ३ ॥ कोटिवीर्याणिपञ्चाशदसुराणांकुलानिवै शतंकुलानिधौम्राणांनिर्गच्छन्तुममाज्ञया ॥ ४ ॥ *

कालकादौर्हृदामौर्याःकालकेयास्तथासुराः युद्धायसज्जानिर्यान्तुआज्ञयात्वरितामम ॥ ५ ॥ इत्याज्ञाप्यासुरपतिःशुम्भोभै-

मौर्यनामानः दैत्याः कालकायाः अपत्यानि पुमान् सः कालकेयाः असुराः दैत्या युद्धाय संग्रामाय सज्जाः सन्तः ससामग्रीकाः सन्तः त्वरिता शीघ्रं निर्यान्तु निर्गच्छन्तु ॥ ५ ॥ इतीति हे राजन् इति आज्ञाप्य भैरवशासनः असुरपतिः शुम्भः बहुभिः महासैन्यसहस्रैः वृतः सन् निर्जगाम इति अनेन प्रकारेण आज्ञाप्य आज्ञां कृत्वा भैरवं शासनं यस्य सः भैरवशासनः भैरवं उग्रशासनं आज्ञा असु-

राणां पतिः असुरपतिः असुराणां दैत्यानां पतिः स्वामी बहुभिः असंख्यातैः महांति च तानि सैन्यानि च महासैन्यानि महासैन्यानां सहस्राणि महासैन्यसहस्राणि तैः महासैन्यसहस्रैः वृतः सन् वेष्टितः सन् ॥ ६ ॥ आयातमिति हे राजन् चण्डिका अतिभीषणं तत् सैन्यं आयातं दृष्ट्वा धरणीगगनान्तरं ज्यास्वनैः पूरयामास चण्डिका देवी अतिभीषणं अतिभयङ्करं तत् प्रसिद्धं आयातं आगतं धरणी च गगनं च धरणीगगनं तयोः अन्तरं धरणीगगनांतरं धरणी पृथ्वी गगनं आकाशं

**खशासनः निर्ज्जगाममहासैन्यसहस्रैर्बहुभिर्वृतः ॥ ६ ॥**

**आयातञ्चण्डिकादृष्ट्वातत्सैन्यमतिभीषणं ज्यास्वनैःपूरयामा-**
**सधरणीगगनांतरं ॥ ७ ॥**

* *

**ततःसिंहोमहानादमतीवकृतवान्नृप घण्टास्वनेनतन्नादानं-**

अन्तरं मध्यं ज्यायाः स्वनाः ज्यास्वनाः तैः ज्यास्वनैः ज्यायाः प्रत्यञ्चायाः स्वनाः शब्दा पूरयामास व्याप्तंचकार ॥ ७ ॥

* * *

तत इति हे नृप ततः सिंहः अतीव महानादं कृतवान् अम्बिका घण्टास्वनेन तन्नादान् उपबृं-हयत् ततः तदनन्तरं ज्यास्वनैः धरणीगगनांतरं व्याप्तानन्तरं अतीव अत्यन्तमेव महानादं महांश्चा-

सौ नादश्च महानादः तं महानादं नादः शब्दः अम्बिका देवी घण्टायाः स्वनः घण्टास्वनः तेन घण्टास्वनेन स्वनः शब्दः तस्य नादाः तन्नादाः तान् तन्नादान् तस्य सिंहस्य नादाः शब्दाः उपबृंहयत् वर्द्धयत् ॥ ८ ॥ धनुरिति हे राजन् धनुर्ज्यासिंहघण्टानां भीषणैः निनादैः नादापूरितदिङ्मुखा विस्फारिताननना काली जिग्ये धनुषः ज्या धनुर्ज्या धनुर्ज्या च सिंहश्च घण्टा च ताः धनुर्ज्यासिंहघण्टाः तासां धनुर्ज्यासिंहघण्टानाम् ज्या प्रत्यञ्चा भीषणैः भयङ्करैर्निनादैः शब्दैः दिशां मुखं दिङ्मुखं

विकाचोपबृंहयत् ॥ ८ ॥ धनुर्ज्यासिंहघण्टानांनादापूरित-
दिङ्मुखा निनादैर्भीषणैःकालीजिग्येविस्फारितानना ॥ ९ ॥
तंनिदानमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशं देवीसिंहस्तथाकालीस-
रोषैःपरिवारिताः ॥ १० ॥ * *

नादैः आपूरितं दिङ्मुखं यया सा नादापूरितदिङ्मुखा नादैः शब्दैः आपूरितं व्याप्तं विस्फारितं आननं यया विस्फारितानना आननं मुखं जिग्ये जिता देव्या धनुरादिशब्दैः कालीशब्दो जित इति भावः ॥ ९ ॥ तदिति हे राजन् तन्निनादं उपश्रुत्य चतुर्दिशं सरोषैः दैत्यसैन्यैः देवीसिंहः तथा काली परिवारिताः तेषां निनादः तन्निनादः तं तन्निनादं तेषां धनुर्ज्यासिंहघण्टानां निनादः शब्दः उप-

स्तुत्य स्तुत्वा चतुर्दिशं चतुर्दिक्षु रोषेण सह वर्त्तमानानि सरोषाणि तैः सरोषैः रोषेण क्रोधेन सह वर्त्तमानानि तानि दैत्यानां सैन्यानि दैत्यसैन्यानि तैः दैत्यसैन्यैः देवी चण्डी काली ललाटजा परिवारिता वेष्टिता ॥ १० ॥ * * *

एतस्मिन्निति हे भूप एतस्मिन् अन्तरे सुरद्विषां विनाशाय अमरसिंहानां भवाय अतिवीर्यबला-न्विताः ब्रह्मेशगुहविष्णूनां तथा च इन्द्रस्य शक्तयः शरीरेभ्यः विनिष्क्रम्य तद्रूपैः चण्डिकां ययुः एतस्मिन् अन्तरे देवीदानवसम्पातावसरे सुरद्विषां दैत्यानां अमरसिंहानां अमरश्रेष्ठानां भवाय

**एतस्मिन्नंतरेभूपविनाशायसुरद्विषां भवायामरसिंहानामति-वीर्यबलान्विताः ॥ ११ ॥ ब्रह्मेशगुहविष्णूनांतथेंद्रस्यचशक्तयः शरीरेभ्योविनिष्क्रम्यतद्रूपैश्चण्डिकांययुः ॥ १२ ॥** यस्यदेवस्यय-

सम्पदे अतिवीर्यं च बलं च ते अतिवीर्यबले अतिवीर्यबलाभ्यां अन्विताः अतिवीर्यबलान्विताः अ-तिवीर्यं अतितेजः बलं सामर्थ्यं अन्विताः युक्ताः ब्रह्मा च ईशश्च गुहश्च विष्णुश्च ते ब्रह्मेशगुहविष्ण-वः तेषां ब्रह्मेशगुहविष्णूनां ईशः शिवः गुहः कार्तिकेयः विष्णुशब्देन वराहनृसिंहावपि शक्तयः स्वा-व्यतिरेकिणो देवताः शरीरेभ्यः ब्रह्मादिदेहेभ्यः विनिष्क्रम्य निर्गत्य तेषां रूपाणि तद्रूपाणि तैः तद्रूपैः तेषां ब्रह्मादीनां रूपाणि स्वरूपाणि चण्डिकां देवीं ययुः प्रापुः ॥ ११ । १२ ॥ यस्येति

हे राजन् यस्य देवस्य यत् रूपं भवति भूषणवाहनं भवति तद्वत् एव तच्छक्तिः असुरान् योद्धुं हि
आययौ रूपं स्वरूपं भूषणं च वाहनं च भूषणवाहनं तयोः समाहारः भूषणवाहनं तद्वत् एव
तथाविधरूपभूषणवाहनेत्यर्थः तेषां शक्तिः तच्छक्तिः तेषां ब्रह्मादीनां शक्तिः स्वाव्यतिरेकिणी
देवता असुरान् दैत्यान् हीति निश्चयेन ॥ १३ ॥ * *
हंसेति हे राजन् हंसयुक्तविमानाग्रे स्थिता साक्षसूत्रकमण्डलुः सा ब्रह्मणः शक्तिः आयाता सा

द्रूपं यथाभूषणवाहनं   तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाय-
यौ ॥ १३ ॥ हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः आयाताब्र
ह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥ १४ ॥ माहेश्वरीवृषारूढात्रि
शूलवरधारिणी महाहिवलयाप्राप्ताचन्द्ररेखाविभूषणा ॥ १५

का या जनैः ब्रह्माणी अभिधीयते हंसैः युक्तं हंसयुक्तं हंसयुक्तं च तत् विमानं च हंसयुक्तविमानं
हंसयुक्तविमानस्य अग्रं हंसयुक्तविमानाग्रं तस्मिन् हंसयुक्तविमानाग्रे अक्षसूत्रं च कमण्डलुश्च अ-
क्षसूत्रकमण्डलू अक्षसूत्रकमण्डलुभ्यां सह वर्तमाना साक्षसूत्रकमण्डलुः अक्षसूत्रं जपमाला सह
वर्तमाना युक्ता शक्तिः स्वाव्यतिरेकिणी देवता आयाता आगता अभिधीयते कथ्यते ॥ १५ ॥ मा-

हेश्वरीति हे राजन् वृषारूढा त्रिशूलवरधारिणी महाहिवलया चन्द्ररेखाविभूषणा माहेश्वरी प्रा-
प्ता वृषे आरूढा वृषारूढा आरूढा स्थिता त्रिशूलं च वरश्च त्रिशूलवरौ त्रिशूलवरयोः धारिणी
त्रिशूलवरधारिणी महाहीवलयौ यस्याः सा महाहिवलया महाही तच्चानन्तौ वलयौ कङ्कणौ च-
न्द्रस्य रेखा चन्द्ररेखा चन्द्ररेखा विभूषणं यस्याः सा चन्द्ररेखाविभूषणा रेखा कला ॥ १५ ॥ कौ-
मारीति हे राजन् शक्तिहस्ता मयूरवरवाहना गुहरूपिणी कौमारी अम्बिका दैत्यान् योद्धुं अभ्याय-
यौ शक्तिः हस्ते यस्याः सा शक्तिहस्ता मयूरवरं वाहनं यस्याः सा मयूरवरवाहना मयूरवरं मयूरश्रेष्ठं

**कौमारीशक्तिहस्ताचमयूरवरवाहना योद्धुमभ्याययौदैत्यान-**
**म्बिकागुहरूपिणी ॥ १६ ॥ तथैववैष्णवीशक्तिर्गरुडोपरिसंस्थि-**
**ताशङ्खचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥ १७ ॥ * ***

गुहरूपिणी गुहसमानाकारा कौमारी कुमारसम्बन्धिनी अम्बिका शक्तिः ॥ १६ ॥ *

तथैवेति हे राजन् तथैव गरुडोपरि संस्थिता शङ्खचक्रगदाशार्ङ्गखड्गहस्ता वैष्णवी शक्तिः अभ्युपा-
ययौ गरुडस्य उपरि गरुडोपरि शङ्खश्च चक्रं च गदा च शार्ङ्गं च खड्गश्च ते शङ्खचक्रगदाशार्ङ्गखड्गाः
शङ्खचक्रगदाशार्ङ्गखड्गाः हस्तेषु यस्याः सा शङ्खचक्रगदाशार्ङ्गखड्गहस्ताः शार्ङ्गं धनुः अत्र शार्ङ्गपदेन
वाणोऽप्युच्यते वैष्णवी विष्णुसम्बन्धिनी बाहुभिर्गरुडारूढाशङ्खचक्रगदासिनी शार्ङ्गबाणधराजाता

सर्पा
कृष्णरः

वैष्णवीरूपशालिनीति वामनपुराणात् एतेनास्या षट्भुजत्वं ॥ १७ ॥ यज्ञेति हे राजन् अतुलं
यज्ञवाराहं रूपं बिभ्रतः हरेः वाराहीं तनुं बिभ्रती या शक्तिः भवति सा अपि तत्र आययौ अतुलं
महत् यज्ञवाराहं यज्ञाङ्गकल्पितवाराहाकारं रूपं स्वरूपं बिभ्रतीति बिभ्रन् तस्या बिभ्रतः बिभ-
र्तिं धारयति हरेः विष्णोः वाराहीं वराहसम्बन्धिनीं तनुं मूर्तिं बिभ्रती बिभर्ति धारयति तत्र त-
स्मिन् संग्रामे आययौ आगता ॥ १८ ॥ नारसिंहीति हे राजन् सटाक्षेपक्षिप्तनक्षत्रसंहतिः नृसिंहस्य
सदृशं वपुर्बिभ्रती नारसिंही तत्र प्राप्ता सटानां आक्षेपः सटाक्षेपः सटाक्षेपेण क्षिप्ता नक्षत्रसंहति-

**यज्ञवाराहमतुलंरूपंयाबिभ्रतोहरेः शक्तिःसाप्याययौतत्रवा-**
**राहींबिभ्रतीतनुं ॥ १८ ॥ नारसिंहीनृसिंहस्यबिभ्रतीसदृशं-**
**वपुः प्राप्तातत्रसटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ १९ ॥ * ***

र्यया सा सटाक्षेपक्षिप्तनक्षत्रसंहतिः सटानां ग्रीवाकेशानां आक्षेपः क्षिप्ता इतः ततः पातिताः न-
क्षत्राणां संहतिः नक्षत्रसंहतिः नक्षत्रसमूहः सदृशं तुल्यं वपुः शरीरं बिभ्रतीति बिभर्ति धारयति
नारसिंही नृसिंहसम्बन्धिनी शक्तिः तत्र तस्मिन् युद्धे ॥ १९ ॥ *
वज्रेति हे राजन् तथैव वज्रहस्ता गजराजोपरिस्थिता सहस्रनयना ऐन्द्री शक्तिः तत्र प्राप्ता यथा
शक्रः भवति तथैव सा भवति वज्रं हस्ते यस्याः सा वज्रहस्ता गजराजस्य उपरि गजराजोपरि गज

राजस्य ऐरावतस्य सहस्राणि नयनानि यस्याः सा सहस्रनयना नयनानि नेत्राणि ऐन्द्री इन्द्रसम्ब-
न्धिनी तत्र तस्मिन् युद्धे शक्रः इन्द्रः सा इन्द्राणी ॥ २० ॥ अतिविशिष्टतेजसः कौशिक्याः सविधे
स्वयं गन्तुमशक्यस्ता देवशक्तीः ईशानो देव्यै दर्शितवानित्याह तत इति हे राजन् ततः ताभिः प-
रिवृतः ईशानः इति चण्डिकां आह इतीति किं हे चण्डिके त्वया देवशक्तिभिः सह असुराः मम
प्रीत्या शीघ्रं हन्यताम् ततः तदनन्तरं देवशक्ति एकत्र गमनानन्तरं ताभिः देवशक्तिभिः परिवृतः

**वज्रहस्तातथैवैंद्रीगजराजोपरिस्थिता प्राप्तासहस्रनयनायथा-**
**शक्रस्तथैवसा ॥ २० ॥ ततःपरिवृतस्ताभिरीशानोदेवशक्तिभिः-**
**हन्यन्तामसुराःशीघ्रंममप्रीत्याहचण्डिकां ॥ २१ ॥ ततोदेवी**
**शरीरात्तुविनिष्क्रांतातिभीषणा चण्डिकाशक्तिरत्युग्राशिवा-**

वेष्टितः ईशानः शिवः आह उवाच देवानां शक्तयः देवशक्तयः ताभिः देवशक्तिभिः देवानां ब्रह्मा-
दीनां शक्तयः देव्यः असुराः दैत्याः हन्यतां प्रहार्यतां ॥ २१ ॥ स्वस्यापि सहायगदर्शनेन यद्दृष्टा
भगवती तस्योत्तरमाह किन्तु काचिच्छक्तिरित्याह तत इति हे राजन् ततः देवीशरीरात्तु अतिभी-
षणा अत्युग्रा शिवाशतनिनादिनी चण्डिका शक्तिः विनिःक्रांताः ततः तदनन्तरं शिववाक्यश्रवणा-

पं

ईश्वरः

न्तरं देव्याः शरीरं देवीशरीरं तस्मात् देवीशरीरात् अतिभीषणा दर्शनमात्राद्भयङ्करी अत्युग्रा रौद्रस्वभावा शिवानां शतं शिवाशतं शिवाशतेन निनदतीति शिवाशतनिनादिनी शिवानां शृगालीनां निनदति शब्दंकरोति चण्डिका अत्यन्तकोपना शक्तिः देवीं विनिष्क्रांता निःसृता ॥ २२ ॥

सा चेति हे राजन् अपराजिता सा धूम्रजटिलं ईशानं इति आह इतीति किं हे भगवन् त्वं दूतः सन् शुम्भनिशुम्भयोः पार्श्वं गच्छ अपरैः अजिता अपराजिता अपरैः शत्रुभिः सा देवी धूम्रजटिलं धूम्रवर्णजटावन्तं ईशानं शिवं आह उवाच शुम्भश्च निशुम्भश्च तौ शुम्भनिशुम्भौ तयोः शुम्भनिशुम्भयोः पार्श्वं निकटं ॥ २३ ॥ ब्रूहीति हे भगवन् त्वं अतिगर्वितौ दानवौ शुम्भं किञ्च निशुम्भं किञ्च तान् ब्रूहि तान् कान् ये अन्ये दानवाः तत्र युद्धाय समुपस्थिताः तान् दानवान् तत्र शुम्भान्तिके समुपस्थिताः आगताः ॥ २४ ॥ वचनमाह त्रैलोक्यमिति हे शुम्भादयः इन्द्रः त्रैलोक्यं लभ-

**शतनिनादिनी ॥ २२ ॥ साचाहधूम्रजटिलमीशानमपराजिता दूतत्वंगच्छभगवन्पार्श्वंशुम्भनिशुम्भयोः ॥ २३ ॥ ब्रूहिशुम्भंनिशुम्भञ्चदानवावतिगर्वितौ येचान्येदानवास्तत्रयुद्धायसमुपस्थिताः ॥ २४ ॥ त्रैलोक्यमिंद्रोलभतांदेवाःसन्तुहविर्भुजः यूयंप्रया-**

तां देवाः हविर्भुजः सन्तु यूयं जीवितुं इच्छथ तर्हि पातालं प्रयातलभतां प्राप्नुयात् हविःभुजन्तीति
हविर्भुजः हविः शाकल्यं प्रयात गच्छत ॥ २५ ॥ वलेति हे शुम्भादयः अथ भवन्तः वलावलेयात् यु-
द्धकांक्षिणः भवन्ति [illegible]त् यूयं आगच्छत मच्छिवाः वः पिशितेन तृप्यन्तु अथवा वलस्य अवलेयः वला-
वलेयः तस्मात् वलावलेयात् अवलेयः गर्वः युद्धं कांक्षन्तीति युद्धकांक्षिणः चेत् यदि तत् तर्हि मम
शिवाः मच्छिवाः शिवाः देव्याः वः युष्माकं पिशितेन मांसेन ॥ २६ ॥ यत इति हे राजन् यतः त-

तपातालंयदिजीवितुमिच्छथ ॥ २५ ॥ वलावलेयादथचेद्भवन्तो

युद्धकांक्षिणः तदागच्छततृप्यंतुमच्छिवाःपिशितेनवः ॥ २६ ॥

यतोनियुक्तोदौत्येनतयादेव्याशिवःस्वयं शिवदूतीतिलोकेस्मि-

न्स्ततःसाख्यातिमागता ॥ २७ ॥ * * * *

या देव्या स्वयं शिवः दौत्येन नियुक्तः ततः अस्मिन् लोके सा शिवदूती इति ख्यातिं आगता यतः
यस्मात् कारणात् दूतस्य भावः दूत्यं दूत्यमेव दौत्यं तेन दौत्येन भावः धर्मः नियुक्तः प्रेरितः ततः
तस्मात् कारणात् सा देवी ख्यातिं प्रसिद्धिं आगता प्राप्ता ॥ २७ ॥ * * *
तस्मात् कारणात् सा देवी ख्यातिं प्रसिद्धिं आगता प्राप्ता ॥ २७ ॥ * * *

ग्मुः यतः कात्यायनी स्थिता भवति शर्वेण आख्यातं शर्वाख्यातं शर्वेण शिवेन आख्यातं कथितं व चः वाक्यं ते प्रसिद्धाः महासुराः महादैत्याः अमर्षेण आपूरिताः अमर्षापूरिताः अमर्षेण क्रोधेन आपूरिताः व्याप्ताः ततः तं देशं तं कं यतः यं देशं कात्यायनी देवी ॥ २८ ॥ तत इति हे राजन् तत अमरारयः उद्धतामर्षाः सन्तः प्रथमं एव अग्रे तां देवीं शरशक्तृष्टिवृष्टिभिः ववर्षुः ततः तदनन्तरं देवीनिकटगमनानन्तरं अमराणां अरयः अमरारयः अमराणां देवानां अरयः शत्रवः दैत्याः उद्धतः अमर्षो येषां ते उद्धतामर्षाः उद्धतः वर्द्धितः अमर्षः क्रोधः प्रथमं एव पूर्वमेव अग्रे सन्मुखे तां प्रसिद्धां

**तेपिश्रुत्वावचोदेव्याःशर्वाख्यातंमहासुराः अमर्षापूरिताजग्मु-**
**र्यतःकात्यायनीस्थिता ॥ २८ ॥ ततःप्रथममेवाग्रेशरशक्तृष्टि-**
**वृष्टिभिः ववर्षुरुद्धतामर्षास्तांदेवीममरारयः ॥ २९ ॥ साचता-**

शराश्च शक्तयश्च ऋष्टयश्च ताः शरशक्तृष्टयः शरशक्तृष्टीनां वृष्टयः शरशक्तृष्टिवृष्टयः ताभिः शरशक्तृष्टिवृष्टिभिः शराः बाणाः ऋष्टयः एकधारखड्गाः ॥ २९ ॥ सेति हे राजन् सा लीलया आध्मातधनुर्मुक्तैः महेषुभिः प्रहितान् बाणान् किञ्च शूलशक्तिपरश्वधान् चिच्छेद सा चण्डिका लीलया अनायासेन आध्मातं च तत् धनुश्च आध्मातधनुः आध्मातधनुषः मुक्ताः आध्मातधनुर्मुक्ताः तैः आध्मातधनुर्मुक्तैः आध्मातं सशब्दं धनुः कार्मुकं मुक्ताः प्रेरिताः महांतश्च ते इषवश्च महेषवः तैः

मद्देषुभिः इषवः बाणाः प्रहितान् प्रक्षिप्तान् तान् प्रसिद्धान् शूलं च शक्तिश्च परश्वधश्च ते शूलश-
क्तिपरश्वधाः तान् शूलशक्तिपरश्वधान् शूलं त्रिशूलं परश्वधः कुठारः ॥ ३० ॥ * *

तस्येति हे राजन् तस्याः अग्रतः तथा तदा काली शूलपातविदारितान् किञ्च खट्वाङ्गपोथितान्
अरीन् कुर्वती सती व्यचरत तस्याः कौशिक्याः अग्रतः अग्रे छन्दसः सन्धिः तथा चण्डीवत् तदा
तस्मिन् देव्याशस्त्रच्छेदे काली ललाटजा देवी शूलेन पातः शूलपातः शूलपातेन विदारिताः शूलपा-

## प्रहितान्बाणान्शूलशक्तिपरश्वधान् चिच्छेदलीलयाध्मात-
## धनुर्मुक्तैर्महेषुभिः ॥ ३० ॥ तस्याग्रतस्तथाकालीशूलपातविदा-
## रितान् खट्वाङ्गपोथितांश्चारीन्कुर्वतीव्यचरत्तदा ॥ ३१ ॥ कम
## ण्डलुजलाक्षेपहतवीर्यान्हतौजसः ब्रह्माणीचाकरोच्छत्रून्येन-

तविदारिताः तान् शूलपातविदारितान् शूलेन त्रिशूलेन पातः प्रहारः विदारिताः मारिताः खट्वा-
ङ्गेन पोथिताः खट्वाङ्गपोथिताः तान् खट्वाङ्गपोथितान् खट्वांगेन नरास्थिपञ्जरेण पोथिताः प्रहारिताः
अरीन् शत्रून् दैत्यान् करोतीति कुर्वती करोति भक्षणं करोति ॥ ३१ ॥ कमण्डल्विति हे राजन्
ब्रह्माणी शत्रून् कमण्डलुजलाक्षेपहतवीर्यान् हतौजसः अकरोत् किञ्च शत्रवः येन येन धावंति

स्म तेन सा धावति स्म कमण्डलोः जलं कमण्डलुजलं कमण्डलुजलस्य आक्षेपः कमण्डलुजलाक्षे-
पः कमण्डलुजलाक्षेपेण हतं वीर्यं येषां ते कमण्डलुजलाक्षेपहतवीर्याः तान् कमण्डलुजलाक्षेपहत-
वीर्यान् आक्षेपः प्रक्षेपः हतं नष्टं वीर्यं बलं हतं ओजो येषां ते हतौजसः तान् हतौजसः हतं नष्टं
ओजः पराक्रमः शत्रवः दैत्याः येन मार्गेण तेन मार्गेण सा ब्रह्माणी ॥ ३२ ॥ माहेश्वरीति हे रा-
जन् माहेश्वरी त्रिशूलेन दैत्यान् जघान तथा वैष्णवी चक्रेण दैत्यान् जघान तथा अतिकोपना
कौमारी शक्त्या दैत्यान् जघान माहेश्वरी महेश्वरसम्बन्धिनीशक्तिः वैष्णवी विष्णुसम्बन्धिनीशक्तिः

येनास्मधावति ॥ ३२ ॥ माहेश्वरीत्रिशूलेनतथाचक्रेणवैष्णवीदै
त्यान् जघानकौमारीतथाशक्त्यातिकोपना ॥ ३३ ॥ ऐन्द्रीकुलि-
शपातेनशतशोदैत्यदानवाः पेतुर्विदारिताःपृथ्व्यांरुधिरौघप्र-

अतिकोपोऽस्ति यस्याः सा अतिकोपना अतिकोपः अतिक्रोधा कौमारी कुमारसम्बन्धिनीशक्तिः ३३
ऐन्द्रीति हे राजन् ऐन्द्री कुलिशपातेन विदारिताः शतशः दैत्यदानवाः रुधिरौघप्रवर्षिणः रक्ताः
पृथ्व्यां पेतुः ऐन्द्र्याः कुलिशं ऐन्द्रीकुलिशं ऐन्द्रीकुलिशस्य पातः ऐन्द्रीकुलिशपातः तेन ऐन्द्रीकु-
लिशपातेन ऐन्द्र्याः इन्द्राण्याः कुलिशं वज्रं पातः प्रक्षेपः विदारिताः प्रहारिताः दैत्याश्च दानवाश्च
ते दैत्यदानवाः रुधिराणां ओघः रुधिरौघः रुधिरौघं प्रवर्षितुं शीलं येषां ते रुधिरौघप्रवर्षिणः

ओघः समूहः शीलं स्वभावः पृथ्व्यां भूमौ पेतुः पतिताः ॥ ३४ ॥ तुंडेति हे राजन् वाराह-
मूर्त्या केचित् दैत्याः तुण्डप्रहारविध्वस्ताः सन्तः भूमौ न्यपतन् केचित् दैत्याः दंष्ट्राग्रक्षतवक्षसः
सन्तः भूमौ न्यपतन् किञ्च केचित् दैत्याः चक्रेण विदारिताः सन्तः भूमौ न्यपतन् वाराही चासौ
मूर्तिश्च वाराहमूर्तिः तया वाराहमूर्त्या देव्या तुंडेन प्रहारः तुण्डप्रहारः तुंडप्रहारेण विध्वस्ताः
तुंडप्रहारविध्वस्ताः तुंडेन मुखेन विध्वस्ताः नाशिताः दंष्ट्रायाः अग्रं दंष्ट्राग्रं दंष्ट्राग्रेण क्षतं वक्षो
येषां ते दंष्ट्राग्रक्षतवक्षसः अग्रं अग्रभागः क्षतं विदीर्णं वक्षः वक्षस्थलं विदारिताः प्रहारिताः भूमौ

**वर्षिणः ॥ ३४ ॥ तुण्डप्रहारविध्वस्तादंष्ट्राग्रक्षतवक्षसः वारा-**
**हमूर्त्यान्यपतंश्चक्रेणचविदारिताः ॥ ३५ ॥ नखैर्विदारितांश्चा**
**न्यान्भक्षयन्तीमहासुरान् नारसिंहीचचाराजौनादापूर्ण-**

पृथिव्यां न्यपतत् पतिताः ॥ ३५ ॥ नखैरिति हे राजन् आजौ नादापूर्णदिगंबरा नारसिंही नखैः
विदारितान् अन्यान् महासुरान् भक्षयन्ती सती चचार आजौ संग्रामे दिक् च अम्बरं च दिग-
म्बरं तस्मिन् दिगम्बरे नादेन आपूर्णे दिगम्बरे यया सा नादापूर्णदिगम्बरा दिक् दिशा अम्बरं
चाकाशं नादेन शब्देन आपूर्णे व्याप्ते नारसिंही नृसिंहसम्बन्धिनीशक्तिः विदारितान् प्रहारितान्
महासुरान् महादैत्यान् ॥ ३६ ॥ * * * *

चंडेति हे राजन् चण्डाट्टहासैः शिवदूत्यभिदूषिताः असुराः पृथिव्यां पेतुः अथ सा तदा पतितान् तान् चखाद अट्टाश्च ते हासाश्च अट्टहासाः चण्डाश्च ते अट्टहासाश्च चंडाट्टहासाः तैः चंडाट्टहासैः अट्टाः महांतः चंडाः उत्कटाः शिवदूत्या अभिदूषिताः शिपदूत्यभिदूषिताः अभिदूषिताः प्रापितमूर्च्छाः असुराः दैत्याः पृथिव्यां भूमौ पेतुः पतिताः अथ अथेत्यनन्तरं दैत्यपतनानन्तरं सा शिवदूती तदा तस्मिन्काले तान् दैत्यान् चखाद भक्षितवती ॥ ३७ ॥ इतीति हे राजन् इति विविधैः अभ्युपायैः महासुरान् मर्दयंतं क्रुद्धं मातृगणं दृष्ट्वा देवारिसैनिकैः नेशुः इति पूर्वोक्तैः विविधैः

दिगम्बरा ॥ ३६ ॥ चण्डाट्टहासैरसुराःशिवदूत्यभिदूषिताःपेतुः
पृथिव्यांपतितांस्तांश्चखादाथसातदा ॥ ३७ ॥ इतिमातृगणं-
क्रुद्धं मर्दयंतंमहासुरान् दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनि-

अनेकैः अभ्युपायैः संग्रामसाधनैः महासुरान् महादैत्यान् मर्दयतीति मर्दयन् तं मर्दयंतं क्रुद्धं क्रोधयुक्तं मातृणां गणः मातृगणः तं मातृगणं मातृणां ब्रह्माण्याद्दीनां गणः समूहः देवानां अरयः देवारयः देवारीणां सैनिकाः देवारिसैनिकाः देवानां इन्द्रादीनां अरयः शत्रवः दैत्याः नेशुः पलायिताः ॥ ३८ ॥ पलायनेति हे राजन् मातृगणार्दितान् दैत्यान् पलायनपरान् दृष्ट्वा महासुरः रक्तबीजः क्रुद्धः सन् योद्धुं अभ्याययौ मातृणां गणः मातृगणः मातृगणेन अर्दिताः मातृगणार्दिताः

तान् मातृगणार्दितान् मातॄणां ब्रह्माण्याद्यीनां गणाः समूहः अर्दिताः पीडिताः पलायने पराः पलायनपराः तान् पलायनपरान् पराः तत्पराः महासुरः महादैत्यः रक्तं वीजं यस्य सः रक्तवीजः वीजं कारणं अभ्याययौ आगतः ॥ ३९ ॥ * *

तदेवाह रक्तेति हे राजन् यदा अस्य शरीरतः रक्तविंदुः भूमौ पतति तदा तत्प्रमाणः असुरः मेदिन्याः समुत्पतति अस्य रक्तवीजस्य शरीरादिति शरीरतः रक्तविंदुः तत्प्रमाणः स एव प्रमाणं यस्य

काः ॥ ३८ ॥ पलायनपरान्दृष्ट्वादैत्यान्मातृगणार्दितान् यो-
द्धुमभ्याययौक्रुद्धोरक्तवीजोमहासुरः ॥ ३९ ॥ रक्तविंदुर्यदाभू
मौपतत्यस्यशरीरतः समुत्पततिमेदिन्यास्तत्प्रमाणस्तदासुरः
॥ ४० ॥ युयुधेसगदापाणिरिन्द्रशक्त्यामहासुरः ततश्चैंद्रीस्ववज्रे

सः तत्प्रमाणः स एव रक्तवीज एव असुरः दैत्यः मेदिन्याः मेदिनीं आश्रित्य समुत्पतति उत्तिष्ठतीत्यर्थः ॥ ४० युयुधे इति हे राजन् महासुरः सः गदापाणिः सन् इन्द्रशक्त्या सह युयुधे ततः ऐन्द्री स्ववज्रेण रक्तवीजं अताडयत् महासुरः महादैत्यः सः रक्तवीजः गदापाणौ यस्य सः गदापाणिः पाणौ हस्ते इन्द्रस्य शक्तिः इन्द्रशक्तिः तया इन्द्रशक्त्या ततः तदनंतरं युद्धप्रारम्भानन्तरं ऐन्द्री इन्द्र-

सम्बम्धनीशक्ति: स्वस्य वज्रं स्ववज्रं तेन स्ववज्रेण ॥ ४१ ॥ कुलिशेनेति हे राजन् आशु कुलिशेन आहतस्य शोणितं सुस्राव ततः तद्रूपाः तत्पराक्रमाः योधाः समुत्तस्थुः आशु शीघ्रं कुलिशेन वज्रेण आहतस्य ताडितस्य तस्य रक्तबीजस्य शोणितं रुधिरं ततः तदनन्तरं रुधिरस्रावा-नन्तरं तद्रूपाः रक्तबीजरूपाः तत्पराक्रमाः रक्तबीजपराक्रमाः समुत्तस्थुः उत्थितवन्तः ॥ ४२ ॥ या-वन्त इति हे राजन् तस्य शरीरात् यावन्तः रक्तबिंदवः पतिताः तावन्तः तद्वीर्यबलविक्रमाः पुरुषाः

णा रक्तबीजमताडयत् ॥ ४१ ॥ कुलिशेनाहतस्याशुतस्यसुस्राव-
शोणितं समुत्तस्थुस्ततोयोधास्तद्रूपास्तत्पराक्रमाः ॥ ४२ ॥
यावन्तःपतितास्तस्यशरीराद्रक्तबिन्दवः तावन्तःपुरुषाजातास्त
द्वीर्यबलविक्रमाः ॥ ४३ ॥ * * * * *

जाताः तस्य रक्तबीजस्य शरीरात् देहात् यावन्तः यावत् संख्याकाः रक्तस्य बिन्दवः रक्तबिन्दवः तावन्तः तावत् संख्याकाः वीर्यं च बलं च विक्रमश्चेति वीर्यबलविक्रमाः तस्य वीर्यबलविक्रमा इव वीर्यबलविक्रमा येषां ते तद्वीर्यबलविक्रमाः वीर्यं प्रभावः बलं शारीरं विक्रमः पराक्रमः उत्साहरूपः तस्य रक्तबीजस्य ॥ ४३ ॥ * * *

णा ईश्वरः असुरेश्वरः तं असुरेश्वर असुराणां दैत्यानां ईश्व : स्वामी त र

ते इति हे राजन् रक्तसंभवाः ते पुरुषाः अपि तत्र मातृभिः समं अत्युग्रशस्त्रपातातिभीषणं यथा-स्यात्तथा युयुधुः रक्तात् सम्भवो येषां ते रक्तसम्भवाः रक्तात् रुधिरात् सम्भवः प्रादुर्भावः ते प्रसिद्धाः तत्र तस्मिन् संग्रामे मातृभिः ब्रह्माण्याद्याटिभिः समं सह शस्त्राणां पातः शस्त्रपातः शस्त्रपातेन अतिभीषणं शस्त्रपातातिभीषणं पातः प्रक्षेपः अतिभीषणं अतिभयङ्करं ॥ ४४ ॥ पुनश्चेति हे राजन् पुनः यदा वज्रपातेन क्षतं अस्य शिरः रक्तं ववाह तदा ततः सहस्रशः पुरुषा जाताः वज्रस्य पातः वज्रपातः

तेचापियुयुधुस्तत्रपुरुषा रक्तसम्भवाः समम्मातृभिरत्युग्रशस्त्र-
पातातिभीषणं ॥ ४४ ॥ पुनश्चवज्रपातेनक्षतमस्यशिरोयदा ववा
हरक्तंपुरुषास्ततोजाताःसहस्रशः ॥ ४५ ॥ वैष्णवीसमरेचैनं-
चक्रेणाभिजघानह गदयाताडयामासऐन्द्रीतमसुरेश्वरं ४६

तेन वज्रपातेन पातः प्रक्षेपः क्षतं विदीर्णं अस्य रक्तवीजस्य शिरः मस्तकं रक्तं रुधिरं ततः रक्तात् ४५ वैष्णवीति हे राजन् समरे वैष्णवी एनं चक्रेण अभिजघान किन्तु ऐन्द्री असुरेश्वरं तं गदया पातया-मास समरे संग्रामे वैष्णवी विष्णुसम्बन्धिनीशक्तिः एनं रक्तवीजं ऐन्द्री इन्द्रसम्बन्धिनी [illegible] णां ईश्वरः असुरेश्वरः तं असुरेश्वरं असुराणां दैत्यानां ईश्व[illegible]ः स्वामी तं [illegible]

वीति हे राजन् वैष्णवी चक्रभिन्नस्य तस्य रुधिरस्रावसम्भवैः तत्प्रमाणैः सहस्रशः महासुरैः [illegible]
व्याप्तं वैष्णव्याः चक्रं वैष्णवीचक्रं वैष्णवीचक्रेण भिन्नः वैष्णवीचक्रभिन्नः तस्य वैष्णवीचक्रभिन्नस्य
भिन्नः विदीर्णः तस्य रक्तबीजस्य रुधिरस्य स्रावः रुधिरस्रावः रुधिरस्रावात् सम्भवो येषां ते रुधिर-
स्रावसम्भवाः तैः रुधिरस्रावसम्भवैः स्रावः प्रवाहः सम्भवः प्रादुर्भावः स एव प्रमाणं येषां ते तत्प्रमा-
णाः तैः तत्प्रमाणैः सः एव रक्तबीज एव महासुरैः महादैत्यैः ॥ ४७ ॥ *

वैष्णवीचक्रभिन्नस्य रुधिरस्रावसम्भवैः सहस्रशो जगद्व्याप्तं तत्प्र
माणैर्महासुरैः ॥ ४७ ॥ शक्त्या जघान कौमारी वाराही च तथा-
सिना माहेश्वरी त्रिशूलेन रक्तबीजं महासुरं ॥ ४८ ॥ स चापि
गदया दैत्यः सर्वा एवाहन[illegible]पृथक् मातृः कोपसमाविष्टो रक्तबीजो

शक्त्येति हे राजन् कौमारी महासुरं रक्तबीजं शक्त्या जघान तथा च वाराही असिना जघान मा
हेश्वरी त्रिशूलेन जघान कौमारी कुमारसम्बन्धिनी शक्तिः महासुरं महादैत्यं वाराही वाराहसम्ब-
न्धिनी शक्तिः असिना खड्गेन माहेश्वरी महेश्वरसम्बन्धिनी शक्तिः ॥ ४८ ॥ स चापीति हे राजन्
कोपसमाविष्टः महासुरः दैत्यः सः रक्तबीजः सर्वा एव मातृः पृथक् पृथक् गदया अहनत् कोपेन

